१ यजनंयाजनंविप्रोतथादानप्रतिग्रहो
नषट्कनथा २ प्रजानांरक्षणंदानमक्षीणांनिग्रहस्तथा यजनाध्ययनेरात्रि
विषयासक्तिवर्जनं ३ यजनाध्ययनेदानंपाशुपाल्यंतथाविशि वाणिज्यंचकुसीदंचकर्मषट्कंप्रकीर्ति-
तं ४ शुश्रूषाब्राह्मणादीनांतदाज्ञापालनंतथा एषधर्मःस्मृतःशूद्रेवाणिज्येनतुजीवनं ५ सर्वेषां
जीवनंप्रोक्तंधर्मेणैवचकर्षणं भिन्नवृत्तिर्यथानस्यात्कुर्याद्विप्रस्तथाचतत् ६ कुर्वन्नुक्तानिकर्मा
णिनृत्यावाक्षत्रियस्यच वृत्त्यभावेद्विजोजीवेद्भिन्नवृत्तिंविवर्जयेत् ७ प्रजानांपालनंदानंशस्त्रवृत्ति
प्रकल्पना निर्जयःपरसैन्यानामेषधर्मःस्मृतोनृपे ८ पुष्पंपुष्पंविचिन्वीतमूलच्छेदंनकारयेत् माला-
कारइवारामेप्रजासुस्यात्तथानृपः ९ लोहकर्मरथानांतुगवांचपरिपालनं
वृत्तिरुदाहृता १० शूद्रस्यद्विजशुश्रूषापरोधर्मःप्रकीर्तितः यदन्यत्कुरुतेधर्मतद्भवेत्तस्यनिष्फलं
११ लवणंमधुतैलंचदधितक्रंघृतंपयः नदुष्येच्छूद्रजातीनांकुर्यात्सर्वस्यविक्रयं १२ विक्रयंमद्यमांसा
नामभक्ष्यस्यचभक्षणं अगम्यागमिनाचौर्यंशूद्रैःस्युःपातहेतवः १३ कपिलाक्षीरपानेनब्राह्मणीगमनेन
नच वेदाक्षरविचारेणशूद्रस्यनरकोध्रुवं १४ इतिश्रीबृहत्पाराशरीयेधर्मशास्त्रेसुव्रतप्रोक्त
संहितायांद्वितीयोऽध्यायः २ अतःपरंगृहस्थस्यधर्माचारंकलौयुगे धर्मंसाधारणंसाक्षा
च्चातुर्वर्ण्यक्रमागतं १ युष्माकंसंप्रवक्ष्यामिपाराशरमुखाच्छ्रुतं षट्कर्मसहितोविप्रःकृषिवृत्तिंसमाश्र
येत् २ हीनांगंव्याधिसंयुक्तंप्राणहीनंचदुर्बलं क्षुधितंतृषितंश्रान्तमनड्वाहंनवाहयेत् ३ स्थिरांगंनिरु

शांतंचसबलंतृसंवाहयेहृषपंकृषी ४ वाहयेद्दिवसस्यार्धंततः स्नानंसमाचरे
५ वंधनंपालनंरक्षांद्विजःकुर्याद्रवांगृही वत्साश्चयत्नतोरक्ष्या
गावोदूरेणचरंत्यानशवंतिशुभायतः ७ प्रा
दोग्धुर्हिपयसोनैववर्धंतेताःकदाचन ८ अनादेयतृणास्त्यक्ता
:पूज्याःकथंनताः ९ स्पृष्टाश्चगावः शमयंतिपापंसंसेविता
१० यस्याःशिरसिब्रह्मास्ते
११ अन्यायादेवनाःसर्वा गवांलोमसुताः
: १२ दहंतिस्पर्शनात्पापंपयसापोषयंतिया: प्रापयंतिदिवं
: १३ यत्खुराहतभूमेस्तुउत्पद्यंतेरजःकणाः प्रलीनंपातकंतैस्तुपूज्यागावः
किमपूज्यंहितस्यागोरितिपराशरोब्रवीत् १४ गौ
दे२
रवला
प्रसूताचदशाहार्वाक्दोग्धिचेन्नरकंव्रजेत् १५ दुर्बलाव्याधिताभी
५॥ दक्सापूः साधुभिर्नैवदोग्धव्याधार्मिकैर्धनमीप्सुभिः १७ कुलांतेपुष्पितागावःकुलांते
बहवस्त्रियः कुलांतेचलचित्तास्त्रीकुलांतेबंधुविग्रहः १८ एकत्रपृथिवीसर्वासशैलवनकानना तस्या
गौर्ज्यायसीसाक्षादेकत्रोभयतोमुखी १९ यथोक्तविधिनाचैतावर्णैःपूज्याःसुपूजिताः पालयन्पूजय
न्नेनाः प्रेत्येहचसमोदते २० दक्षिणाभिमुखागावउत्तराभिमुखाअपि बंधनीयातथाचैतान्नप्राक्य

ः २१ वाजिगोवृषशालायांसुतीक्ष्णंलोहयंत्रकं स्थाप्यंतुसर्वदातस्याद्दुःखलब्धिविमोक्ष
कृत् २२ मावोदेवाःसदारक्षाःपाल्याःपोष्याश्चसर्वदा ताडयंतिचयेपापायेचाक्रोशंतितान्नराः २३ नर
कान्नोनचपच्यंतेगोभिःश्वासप्रपीडिताः सपलाशेनशुष्केणनादंडेननिवर्तयेत् गच्छागच्छेतितांब्रूयान्मा
मापीरितिवारयेत् २४ यांसंस्मृत्यनमस्कृत्यकुर्यात्तांचप्रदक्षिणां प्रदक्षिणीकृतातेनससद्वीपावसुंध
रा २५ तृणोदकादिसंयुक्तंयोददातिगवाह्निकं सोश्वमेधसमंपुण्यंलभतेनात्रसंशयः २६ गवांकंडूय
नंधर्म्यंगोप्रदानसमंभवेत् तुल्यंगोशतदानस्यभयतोगांप्रपातियः २७ पृथिव्यांयानितीर्थानिआस-
मुद्रसरांसिच गवांशृंगोदकस्यापिकलांनार्हंतिषोडशीं २८ पातकानिकुतस्तेषांयेषांगृहमलंकृतं ।
सुवालवत्साभिःसदाश्रीभिरिवस्वयं २९ ब्राह्मणानांगवांचैवकुलमेकंद्विधाकृतं तिष्ठंतियत्रमंत्राश्च-
यत्रसंतिहवींषिच ३० गोभिर्यज्ञाःप्रवर्तंतेगोभिर्वेदाःप्रवर्धिताः गोभिर्वेदाःसमुत्तीर्णाःसषडंगपदक्र
माः ३१ सुरेतायस्ययस्याग्रेपृष्ठतोयस्यताःस्थिताः वसंतिहृदयेनित्यंतासांमध्येवसंतिये ३२ तेपु-
ण्याःपुरुषाःक्षोण्यांनाकलोकेपिदुर्लभाः येगोभक्तिकरानित्यंपालयेयेचगोप्रदाः। ३३ शृंगमूलेस्थितोब्र
ह्माशृंगमध्येतुकेशवः शृंगाग्रेशंकरंविद्यात्त्रयोदेवाःप्रकीर्तिताः ३४ तीर्थानियस्याःशृंगाग्रस्थावरा-
णिचराणिच सर्वेदेवाःस्थितादेहेसर्वदेवमयाहिगौः ३५ ललाटाग्रेस्थितादेवानासामध्येतुषण्मुखः
कंबलाश्वतरौनागौतत्कर्णयोर्व्यवस्थितौ ३६ सौरभेय्याःस्थितौतस्याश्चक्षुषोःशशिभास्करौ
वसवश्चाष्टौजिह्वायांवरुणःस्थितः ३७ सरस्वतीचहुंकारेयमयक्षौचगंडयोः

वेजाह्नवीजलं कालिंदीगोमयेतस्यादेवताअपराअपि अष्टाविंशतिदेवानांकोट्योलोमसुसंस्थिताः ३९
उदरेगार्हपत्योग्निर्हृदयेदक्षिणस्तथा मुखेष्वाहवनीयस्तुकुक्षौसभ्यावसथ्यकौ ४० एवंयोवर्तते
गोषुताडनक्रोधवर्जितः सपुष्टांश्रियमाप्नोतिस्वर्गलोकेमहीयते ४१ कुलंतस्यानलंघेतपूति
गंधंनवर्जयेत् यावत्सिंचतितद्भूमिंतावत्पुण्यंप्रवर्धते ४२ पयस्विनींसवत्सांयःसुशीलांतरुणींतथा
गांशिवस्यालयेदद्यात्तेनदत्तंजगत्त्रयं ४३ इतिबृहत्पाराशरीयेगोमाहिमा उक्षाणोवैधरा
सृष्टाः सस्यस्योत्पादनायच तेरुत्पादितसस्यैश्चसर्वमेतद्विधार्यते १ यस्त्वेतान्पालयेद्यत्नाद्दध्यै
श्चैवयत्नतः जगंतितेनसर्वाणिपालितानिनसंशयः २ यावद्गोपालनेपुण्यंप्रोक्तंपूर्वंमनीषिभिः
उक्ष्णांचपालनेपुंसांफलंदशगुणंभवेत् ३ जगदेतद्धृतंसर्वमनडुद्भिश्चराचरं वृषाएवततोरक्ष्याः
पालनीयाःप्रयत्नतः ४ धर्मोयंभूतलेसाक्षाद्ब्रह्मणात्यवतारितः त्रैलोक्यधारणायालमन्नानांचप्र
सूतये ५ अनाघ्रातानिघासानिभक्षयंतिस्वकामतः फलाभिलाभूतलेदूरमुदाराःकेर्नपूजिताः ६ उ
त्पादयंतिसस्यानिमर्दयंतिवहंतिच आनयंतिदवीयस्तदुक्षतःकोधिकोभुवि ७ स्कंधेनपृथ्वी
चवहंतिभारंनाकांक्षंतिकिंचिद्धनिकस्यदुःखं स्वीयेनदेहेनपरस्यजीवान्पुष्यंतिरक्षंतिचवर्धयंति ८
धन्यास्तुगावोवसुधातलेस्मिन्विशेषतस्तुगोवृषगर्भभारं भारःपृथिव्यादशताडितायाएकस्यचोक्ष्णो
प्यपिसाधुवाद्यः ९ एकेनदत्तेनवृषेणयेनभवंतिदत्तादशसौरभेय्यः माहेश्व्यपीयंसरणीसमाना त
स्माद्वृषात्पूज्यतमोस्तिनान्यः १० उत्पाद्यसस्यानितृणान्यदंतितान्येवभूयःसततंवहंति नभारवि

नश्यतेगृही पांजलासप्तहस्तान्वचतुरस्राचवर्तुला शालादिशुभकाष्ठानांहलीयाविदुषांमता
नस्यावेधःसकर्णायाः कार्यानववितस्तिभिः नीचोच्चवृषमानेनतज्ज्ञास्तांप्रवदंतिहि १२ चतुर्ह
स्तंयुगंकार्यंस्कंधस्थानेऽर्धचंद्रकं मेषशृंग्याःकदंबस्यशालाद्यन्यतमस्यच १३ शम्यावेधाद्बहिःका
र्यादशांगुलप्रमाणिका तन्मानेनप्रवालीचतदंतरंदशांगुलं १४ मनोज्ञसमग्रंथिर्वैणवश्चचतुः
करः तदग्रेचापिकर्तव्यायवाकारातुलोहवत् १५ हीनातिरिक्तंकर्तव्यंनैवकिंचित्प्रमाणतः कुर्या
दनडुहान्नियादहत्यानरकंव्रजेत् १६ यथाहृदयथाशोभंवाहकस्यप्रमाणतः भूमेश्चकर्षणापालंसी
रंतज्ज्ञावदंतिहि १७ योजनंतुहलस्याथप्रवक्ष्यामियथातथा ज्येष्ठानक्षत्रसंयुक्तेपुण्येहनिविधीय
ते १८ अन्यत्रापिशुभेभेतुदिनेयत्रतुवध्यते शुभेराशिगतेचंद्रेतत्प्रकार्यंविपश्चिता १९ यत्नलक्ष्य
हितंचापिपुण्यंवामनसिस्फुरेत् तत्रविद्वान्द्विजश्रेष्ठःपुण्येहनिकरोतितत् २० मातृश्राद्धंद्विजःकुर्या
द्यथोक्तविधिनागृही द्रव्यकालानुमानेनकुर्वाणोधर्मतःकृषिं २१ गोलिख्यमंडलंपुष्पधूपदीपैःस
मर्च्यच इंद्रायचतथाश्विभ्यांमरुद्भ्यश्चतथाद्विजः २२ कुर्याद्बलिंद्रुतिंविद्वान्गुधान्नंकश्यपायच
तथाकुमार्यैसीतायैअनुमत्यैतथाबलिं २३ नमःस्वाहेतिमंत्रेणसर्वांछन्नात्मनःशुभं दधिगंधा
क्षतैःपुष्पैःशमीपत्रैस्तिलैस्तथा २४ दद्याद्बलिंवृषाणांतुमध्वाज्यप्राशनंतथा संघृष्यसीरफालाग्रं
हेम्नावारजतेनवा २५ प्रलिप्यमधुसर्पिभ्यांतत्कुर्वीतप्रदक्षिणां अग्नेउष्णोमंडलंकृत्वाकुर्यात्सीर
प्रवाहणं २६ पुण्यंलांगलकल्याणःकल्याणायनमोस्त्विति सीतायाः

दधिदूर्वाक्षतैः पुष्पैः शमीपत्रैः शुभप्रदैः २८ सीतां पूज्य तु
स सप्तधान्यानि चादाय प्रोक्ष्य पूर्वामुखो हली २९ तानि दत्वा द्विजः क्षेत्रे तु
किरन्भूमिं कृषेद्द्विजः न तिलैर्न यवैर्हीनो द्विजः कुर्वीत कर्षणं ३० तद्विहीनं प्रकुर्वाणं न प्रशंसंति देवताः
तिलपत्राच्च्युतं तोयं दक्षिणस्यां पतेद्दिशि तृप्यंति पितरस्तेन यावन्नातिलविक्रयः ३१ विक्रीणीते ति
लान्यस्तु मुक्त्वान्यद्धान्यसामकान् प्रमुच्य पितरस्तं तु प्रयांति हि तिलैः सह ३२ तुषाज्जलं यवस्थं तु प
त्रेभ्यो भूतले पतेत् पयोदधिघृताद्यैस्तु तर्पयेत्सर्वदेवताः ३३ दैवपर्जन्यभूसीरयोगात्कृषिः प्रजाय
ते व्यापारात्पुरुषस्यापि तस्मात्तत्रोद्यतो भवेत् ३४ शालीक्षुशणकार्पासवार्ताकप्रभृतीनि च वाप
येत्सर्वबीजानि सर्वं चापि न सीदति ३५ चंद्रक्षये तिथौ विप्रो यो भुनक्ति हि पक्वचित् तं पंचदश वर्षा
णि त्यजंति पितरो हतं ३६ चंद्रक्षये द्विजो विद्वान्यो भुनक्ति पराशनं भोक्तुर्मासार्जितं पुण्यं भवेद्दा
नदस्य तत् ३७ चंद्रार्कयोः समायोगे तरुस्तंबादिकृंतनं तत्पर्णसंव्ययात्तस्य भ्रूणहत्या न संशयः ३८
चंद्रार्कयोः समायोगे यः कुर्यात्स्त्रीनिषेवणं स्युः शुक्रभोजिनस्तस्य तं मासं पितरो हताः ३९ वनस्प
तिगते सोमे यो ध्यानं गच्छति द्विजः प्रनष्टद्विजकर्माणं तं त्यजंत्यमरादयः ४० वासांसि द्रुमणाशे तु
रजकस्यांतिके क्षिपेत् पिबंति पितरस्तस्य मासं वस्त्रमलांबु तत् ४१ सोमक्षये द्विजो याति त्यक्त्वा
न्यं यस्तु वाशनं स देवपितृशापाग्निदग्धो नरकमावसेत् ४२ अष्टमीकामभोगेन षष्ठी तैलोपभोग
तः कुहूश्च दंतकाष्ठेन हिनस्त्यासप्तमं कुलं ४३ चंद्राप्रतीतो पुरुषस्तु देवाद्याद्मत्यायद्दिंतका

एषएवविधिर्ज्ञेयोधान्यानांचप्रवेशने
सीमांश्मशानभूमिंचवृक्षछायाक्षितिंतथा ६४ भूमिंनिखात
यूपांनचयनस्थानमेवच अन्यामपिहिनिर्वाप्यांनकृषेत्कृषिकृद्भुवं ६५ नोखनांवाहयेद्भूमिंनचाश्मशर्क
राकुलां नगोचरांनप्रदत्तांननदीपुलिनंतथा ६६ यद्यसौवाहयेल्लोभा द्वेषान्मत्सरतोपिच क्षीयतेसौनि·
राशापैःसपुत्रपशुबांधवः ६७ तामिस्रंनरकंघोरंपापीयान्यातिनिश्चितं योपहृत्यपरकीयांकृषिकृद्वाहये
द्भुवं सभूमिस्तेयपापेनचिरंनरकेवसेत् ६८ एकसंख्यमपिस्वर्णंभूमिमंगुलमात्रिकां तथैकामपिगांहृत्वा·
मृत्युंतंनरकंवसेत् ६९ नदूरेवाहयेत्क्षेत्रंनचैवात्यंतिकेतथा नवाहयेत्साथिक्षेत्रंवाहयन्दुःखितःसदा ७० क्षे·
त्रेष्वेवंवृतिंकुर्याद्यासुष्ट्रोनविलोकयेत् नलंघयेत्पशुर्नाश्वोनमहिषोयाचशूकरः ७१ वंशाश्चयत्नतःकार्या
मृगादिवासनायच तयाप्युपद्रवंराजातस्करादिसमुद्भवं ७२ संरक्षेत्सर्वतोयत्नाद्यस्मात्कृष्यात्यसौकृशान्
पिकृन्मानवस्त्वेवंमलापर्संकृषेद्धरां अनवद्यांशुभांस्निग्धांजलावगाहनक्षमां ७३ धरणींवाहयेन्नित्यां·
यत्रतोयंस्थिरीभवेत् वाहयेत्सलिलासन्नमृद्धांसेकसंभवः ७४ शारद्यमुच्चकेभूमौकांवाद्यंवापयेद्धली
अथितत्काप्रकार्पासंवदंस्यऋतुहेमजं ७५ वासंतंग्रीष्मकालीयंवाप्यंस्निग्धेषुलहृदः
जलोपांतेपुनेक्षवः ७६ मूलवृंताकशाकानिकंदलानिजलांतिके विद्यांतदपिपानीयेक्षेत्रेष्वेवंयवादि
कं ७७ गोधूमाश्चमसूराश्चवल्लाःखलकुशास्तथा समास्तेपुचतेवाप्याधान्यान्यन्यानियोगतः ७८ कु
लत्थामुद्गमाषाश्चराजमाषादिकास्तथा वाप्याभूमिविशेषेतुभूमिजीवंविजानता ७९ तिलाबहुविधा

कुटुंबिसीरेणाविवाहितापिस्याद्भूतधात्रीवरदानुदात्री
: तेमरादिवरप्राप्ताः स्वर्गलोकमवाप्नुयुः ३५ षड्भिर्गोभिः कृषिःप्रोक्ता
गृहंचगृहिणीसाहुस्तद्विवाहस्तथोच्यते ३६ इतिबृहत्पाराशरीयेधर्मशास्त्रेसुव्रतप्रोक्त
संहितायांकृषिकर्मसीताधर्मोयज्ञोपधर्मोनामतृतीयोऽध्यायः ३ स्वयंचवाहितैः क्षेत्रैर्धान्यैश्चस्वयम
र्जितैः कुर्याद्विवाहयागादिपंचयज्ञांश्चनित्यशः १ अष्टौविवाहानारीणांसंस्कारार्थंप्रकीर्तिताः ब्राह्मादिका
न्क्रमेणैतान्संप्रवक्ष्याम्यतःपृथक् २ जात्यादिगुणयुक्तायपुंस्त्वेसतिवरायच कन्यालंकृत्यदीयेतविवाहोवैधसः
स्मृतः ३ रेतोमज्जतियस्यास्तु मूत्रंचह्रादिफेनिलं स्यात्पुमांल्लक्षणैरेतैर्विपरीतस्तुषंढकः ४ यायज्ञेवर्तमा
नेत्वृत्विजेकर्मकुर्वते कन्यालंकृत्यदीयेतविवाहःसतुदैविकः ५ वरायगुणयुक्तायविदुषेसदृशायच क
न्यागोद्वयमादायदीयेतार्षःसउच्यते ६ कन्याचैववरश्चोभौस्वेच्छयाधर्मचारिणौ स्यातामितिहियत्रोक्त्वादा
नंकार्यंविधिस्त्वयं ७ एतावद्देहिमेद्रव्यमित्युक्त्वाप्रवरायच यत्रकन्याप्रदीयेतसवैदैत्याविधिःस्मृतः ८ यत्रा
न्योन्याभिलाषेणउभयोर्वरकन्ययोः तयोस्तुयोविवाहःस्याद्गांधर्वःप्रथितस्तुसः ९ युद्धेहृत्वाबलात्कन्यांय
श्छिद्यापहृत्यच ऊह्यतेसतुविद्वाद्भिर्विवाहोराक्षसःस्मृतः १० सुप्तांमत्तांप्रमत्तांवाछलात्कन्यांप्रगृह्यतेसर्वे
ष्यःसतुपापिष्ठःपैशाचःप्रथितोऽष्टमः ११ आद्याआद्यस्यषट्प्रोक्ताधर्म्याश्चत्वारएवहि
आद्यस्यचद्वयस्यच १२ पंचमश्चतथाषष्ठःस्मृतौत्रिचतुर्थयोः द्वितीयस्यापियेप्रोक्ताएतयोस्तेनचाष्टमः
वैधस्याच्चानुरूपेणद्वितीयाःपरमाःस्मृताः सर्वेसममेकस्यद्वितीयस्यैवकीर्तिताः १३ अंत्यावित्तधर्मेप्रोक्तौ

...नन्यां शुभनादांच पतिप्रीतिकरामपि श्वश्रूश्वशुरयुर्वादिशुश्रूषाकारिणीं प्रियां ३४ अव्यंगां कुलजातां ताम्
...नभिशक्तवंशजां प्रस्वेदशुभगंधांच शुभमिच्छन्समुद्वहेत् ३५ विप्रः स्वामपरे द्वे च राजा स्वामपरां तथा वैश्यः
...स्वां च तुर्यां च क्रमेणैव समुद्वहेत् ३६ पितृतः सप्तमीमेके मातृतः पंचमीमपि उद्वहेदिति मन्यंते कुलधर्मस
...माश्रिताः ३७ उक्तलक्षणकन्यायाः कृतपाणिग्रहं द्विजः धर्म्योद्वाहेन केनापि तदा दद्याद्धुताशनं ३८ दायाद्यकालेवाद
...यात्तदुक्तकर्मकृद्द्विजः यदा वापि भवेच्छूद्रासंपत्तिर्वा यदा भवेत् ३९ ऋतावृतौ स्त्रियं गच्छेत् स्त्रीच्छया वाव
...स्मरन् सर्वतादिच्छया कुर्याद्यथोभयोर्भवेद्धृतिः ४० भोज्यालंकारवासोभिः पूज्याः स्युः सर्वदा स्त्रियः यथा
...केचिन्न शोचंति नित्यं कार्यं तथा नृभिः ४१ आयुर्वित्तं यशः पुत्राः स्त्रीप्रीत्या स्युर्नृणां सदा नश्यंते ते तदप्रीतौ
...शापादसंशयं ४२ स्त्रियो यत्र तु पूज्यंते सर्वदा भूषणादिभिः पितृदेवमनुष्याश्च मोदंते तत्र वेश्मनि ४३
...त्ययस्तु यतः स्त्रियः साक्षाद्गृहस्थे गृहदेवताः वर्धयंति कुलं तु या नाशयंत्यपमानिताः ४४ नावमान्याः स्त्रि
यः साङ्गः पतिश्वशुरदेवरैः भ्रात्रा पित्रा च मात्रा च तथा बंधुभिरेव च ४५ स्त्रियाश्च पुरुषस्यापि भवेद्यत्रो
भयोर्धृतिः तत्र धर्मार्थकामाः स्युस्तदधीनाः पतस्स्वामी ४६ षट्कर्माणि नृणां तेषां येषां भार्या पतिव्रता
पतिलोकं तु ता याति तपसा तेन योगवत् ४७ पतिव्रता सुधाध्वीस्त्री अपि दुष्कृतकारिणं याति या पतिमु
हत्य केलीव पतितोरगं ४८ जीवन्वापि मृतो वापि पतिरेव प्रभुः स्त्रियाः नान्यास्ति देवता तासां पतिरेव
प्रभुर्यतः ४९ मनसापि हि दुष्टा स्त्री यान्यभावा पतिं प्रति सा याति नरकं घोरं तद्द्रोहादणुतोपि वा ५०
नियोज्या गृहकृत्येषु सर्वदा सन्निधि स्त्रियः गृहार्थासक्तचित्तास्तास्तदेवाहं इति शोचितुं ५१ स्त्रीणा

मयूगुणः कामोव्यवसायश्चषड्गुणः लज्जाचतुर्गुणातासामाहारश्चतदर्धकः ५२ नजातिंनैववित्तंचनचरूप·
मपेक्षते किंतुताभिःपुमानेषदतिमत्तैवभुज्यते ५३ किंकुर्वाणाःस्त्रियोभर्तुरायुष्यधननाशकाः अनाचारेण
तास्तस्यपरासक्ताभवंतिहि ५४ नारीणांचनदीनांचगतिर्नज्ञायतेनृभिः कुलकूलप्रपातेचकालक्षेपेणविध्य
ते ५५ नैवचारित्रनित्तानिस्त्रीणांदेवानजानते किंपुनःप्राणिमात्रास्तुसर्वथानरबुद्धयः ५६ तस्मात्ताः
सर्वथारक्ष्याः सर्वेपियेर्नृभिः सदा श्वशुरैर्देवरार्येश्रपितृभ्रात्रादिभिस्तथा ५७ विवाहात्प्राक्पितारक्षेद्यौ
वनस्थांपतिस्तथा रक्षेत्पुत्रःस्थविरेतुनास्तिस्त्रीणांस्वतंत्रता ५८ स्वातंत्र्येणविनश्यंतिकुलजाअपियोषि
तः अस्वातंत्र्यमतःस्त्रीणांप्रजापतिरकल्पयत् ५९ अशौचाश्चसशौचास्ताअमेध्याअपिपावनाः दुर्वाचो
पिसुनानस्तास्तस्मादन्नेपयेन्नताः ६० शौचंचवाचंचमेध्यत्वंसोमगंधर्वपावकाः ददुस्तासांवरानेतांस्तस्मा
न्मेध्यतराःस्त्रियः ६१ भर्तारंवोभाविष्यंतिशुभंन्नित्तानुसारिणः यथेच्छाकामिनःसर्वेतासामिन्द्रोवरंददौ
६२ तस्मात्तदिच्छयाकामीपुमान्नस्याद्यथास्त्रियः रक्षणीयायतस्तास्तुसर्वोपायेनयोषितः ६३ सामाह
मृत्कभिल्याधर्देवेभ्यंस्तान्नृणांतनौ अर्थकायानराणांताःस्त्रीणांनातःपृथग्व्रतं ६४ नदिवापिस्त्रियंगच्छेदि
च्छेत्तादिच्छयापिच नपर्वसुनसंध्यासुनतौरात्रिचतुष्टये ६५ नोदक्यांनदिवागच्छेन्नसगर्भांव्रतस्थितां
अधिगच्छेदविद्वान्यस्तदायुःक्षयमेतिच ६६ वंध्याष्टमेपरित्याज्यानवमेचमृतप्रजा एकादशेस्त्रीजननी
शयस्त्वप्रियवादिनी ६७ नवक्रोभिगमंकुर्यात्पाणिग्राहीतुयोषितः कुर्याच्चेत्पितरस्तस्यरेतोभुजःपतं
तिहि ६८ भार्याधीनंसुखंपुंसांभार्याधीनंगृहंधनं भार्याधीनाश्रुतोत्पत्तिर्भार्याधीनःशुभोदयः ६९ नगृ

वैंष्टफलभाग्याबद्ब्रह्मणः पदमव्ययं ८८ यः कालाकालविद्विप्रोनेनेनस्पर्शीसकर्हिचित् प्रोस्पृष्टेनापिरोत्त
त्रयकृत्वानेतिसंस्मृतो ८९ दशपंचांगुलिव्याप्तंनासिकायांबहिःस्थितं जीवोयत्रविबुध्येत साकलाषोडशी
स्मृता ९० सर्वमेतत्तयाव्याप्तंत्रैलोक्यंसचराचरं ब्रह्मविद्येतिविख्यातावेदांतेषुप्रदर्शिता ९१ नवेदंवेदमित्या
हुर्वेदानांपरमंपदं तत्पदंविदितंयेनसविप्रोवेदपारगः ९२ आहुतिःसापराज्ञेयासाचशांतिःप्रकीर्तिता गा
यत्रीसाचविज्ञेयासाचसंध्याप्रकीर्तिता ९३ तज्जप्यंतच्चविज्ञेयंतद्हुतंतदुपासितं तांकलांयोविजानातिस
कलाज्ञोद्विजःस्मृतः ९४ तत्तुरीयंपदंशांतंयस्मिन्लीनमिदंजगत् तज्ज्ञात्वापरमंतत्त्वंनभूयःपुरुषोभवेत्
९५ प्राणमार्गास्त्रयःप्रोक्तास्तिस्रोनाड्यःप्रकीर्तिताः इडाचपिंगलाचैवसुषुम्नाचतृतीयका ९६ इडानवै
ष्णवीनाडीब्रह्माणीपिंगलास्मृता सुषुम्नाचेश्वरीनाडीत्रिधाप्राणवहास्मृता ९७ उत्तरंदक्षिणंज्ञेयंदक्षि
णोत्तरसंज्ञिकं मध्येतुविषुवंप्रोक्तंपुरहृदयविनिःसृतं ९८ संक्रांतौविषुवेचैवयोविजानातिविग्रहं नित्ययु
क्तःसयोगीनब्रह्मवादिभिरुच्यते ९९ मध्याह्नेचार्धरात्रेचप्रभातेस्तमयेतथा विषुवंतंविजानीयात्पुरहृदय
विनिर्गतं १०० हृत्पुंडरीकसरणिंमनोसंस्थानमेवच प्राणायामोभ्यसेद्भिसात्माध्वर्युःप्रतिष्ठितः १ ज्वल
येत्पूरकेणाग्निंस्थापयेत्कुंभकेनतु रेचकेणार्धचक्रेणततोहोमंकरोतियः २ यत्तद्हृदिस्थितंपद्मसधोना
लंव्यवस्थितं तस्मिन्विकसितेपद्मेप्राणोवायुर्विसर्पति ३ वामहस्तधृतेपात्रेदक्षिणेचांससिस्थितः सना
ड्युच्चरेद्धिप्रोअच्छिन्नाग्रंतुपूरयेत् ४ पूरयन्पूरकंप्राहुर्निश्चलंकुंभकंविदुः निर्गच्छतिशनैर्वायोरेचकंतं
विनिर्दिशेत् ५ स्वाहांतैःप्रणवाद्यैश्चपुमान्नाम्नाचवायुभिः जितात्मायोजितःषष्ठःषडाहुत्याहुतंभवे

स्पृष्टमात्रेणपुनराचमनंचरेत् ७ सुरव्यसाहवनीयोग्निर्गा
दक्षिणाग्निश्चगृह्याग्निश्चापिदक्षिणे ८ सभ्यश्चोत्तरतश्चित्यइत्यग्निसारणक्रमः प्रा
दचिंतयेत्तद्देवत्तु ९ होतारंप्राणमित्याहुरुद्गातारमपानकं ब्रह्माणंव्यानमित्येकेदानम
ध्व मित्यपि १० समानंचेहयज्ञानमित्यार्त्विजांकसंबुधाः अहंकारंपशुंचात्रप्रणवंयूपमित्यपि ११ बुद्धि
रित्यरणिः सृष्टिलोमानिचकुशाःस्मृताः मनोविपक्तालग्निजस्तातज्ञोशितिमचक्षते १२ कलाग्निमात्रगोंका
रंहुंकारंचतथापुनः उत्तिष्ठजननाचग्नेहरिलोहितपिंगल १३ सप्तपरिधयेतुग्यंस्तुदन्हिदैवतंन्नयत् ॥
द्विजिव्हजठरायसेस्वाहोंप्राणायच्यत्सयः १४ इंद्रगोपकवर्णाय त्रिजिह्वायाग्निदेवता ॐस्वाहेतिअपा·
नायस्वाहाकारांतमुच्चरेत् १५ पद्मकिंजल्कवर्णायबहुरूपायचाग्नये पशनलायव्यानायओंस्वाहाइति
चोच्चरेत् १६ गोक्षीरसमवर्णायपर्जन्यवन्हिदैवत स्वाहोदनायसोंकारमलनायपरिलिये १७ तडित्स·
मानवर्णायवाय्वग्निदैवतायते ओंस्वाहेतिसमानायओंस्वाहावेतिवेधसे १८ तर्जनीमध्यमांगुष्ठलग्ना
प्राणस्यचाहुतिः मध्यमानामिकांगुष्ठेरपानायाहुतिःस्मृता कनिष्ठानामिकांगुष्ठैर्व्यानस्यपरिकीर्तिता १९
मध्यमानामिकास्त्वन्यासुदानेजुहुयाद्बुधः समानेसर्वैरुन्हृत्यआहुतेःस्यात्समानता २० जलंपीत्वाचतृप्यं
तिरेचयेच्चशनैःशनैः ततोन्यदन्नमश्नीयात्पूरणायोदरस्यतु २१ विप्राणामग्निहोत्रस्ययेद्विजानैवजा
नते अपानेनतुभुंजंतितेषांसुरवमपानवत् २२ ज्ञात्वाविधिंचयोभुंक्तेयथोक्तमिदमाचरन् इहामुत्रच
पूज्यतंब्रह्मभूयायकल्पते २३ त्रिःसप्तकुलमुधृत्यदातुरप्यन्नयंपावेत् दातुरेवाहितत्पुण्यंभोक्तुश्चापिहि

तत्फलं २४ दाताचैवतु भोक्ताचताबुभौस्वर्गगामिनौ योजानातिविधिंचैभंसभवेद्ब्रह्मवित्तमः २५ एकंपिबति
गंडूषंत्यजेदर्धंधरातले पीतेनपितृतृप्तिस्तुभूत्यक्तेभूमिदेवताः २६ पिबेदेकंचगंडूषंब्राह्मणोज्ञानदुर्बलः स
हत्वापितृदेवांश्चआत्मानंनरकंनयेत् २७ रहस्यंसर्वशास्त्राणांक्षितावस्यंतदुर्लभं ज्ञानानामुत्तमंज्ञानंकस्य·
चिन्नप्रकाशयेत् २८ योज्ञात्वात्वप्रकाशयानिमुंसामविदुषांवदेत् प्राणायामफलंहत्वाआत्मानंनरकंनयेत्
२९ योश्नीयाद्द्विधिवद्विप्रःकृत पात्रपरिग्रहः पूजितान्नमवाप्नुपंसापोशानंससाक्षिकं ३० वाग्यतोन्यत्तपा
त्रोश्नन्यासावधावपिद्विजः तस्यत्रिरात्रिपुण्यासिदानेपिमुनयोविदुः ३१ चतुस्त्रिकोणांवृत्तांचविभक्तत्वावि
शांक्रमात् प्राहुःपरिहृतंसंतस्तद्वीनंनतुराक्षसं ३२ गृह्णीयात्सागपोशानंतथामुक्त्वासकृत्सयः अनग्नस
मृतंतत्स्याद्भुक्तमन्नंद्विजन्मनां ३३ कालेभुक्त्वासमुत्थायप्रेक्षविप्रंसमीत्स्वन अहपतिंमुखंस्थित्वाचिंतयेद्
द्विकृत्यकं ३४ सायंभोजनवेलायांभिक्षाःसम्प्राप्यपंचवा दत्वाशेषंसमश्नीयात्सापत्याभृतकैःसह ३५ नि
र्वसकलंसापिकिंचित्स्थित्वासुखेनतु स्वस्त्रीयरतिकार्येषुसापिस्यात्तत्परापुनः ३६ उपास्यपश्चिमांसंध्यां·
हुत्वाचैवहुताशनं किंचित्सायंसमश्नीयात्सायंप्रातरितिश्रुतिः ३७ स्वाध्यायमभ्यसेत्किंचिद्यामयुग्मंशयी
तत्र शयनेमध्यमौयामौब्रह्मभूयायकल्पते ३८ शयीतशयनेपश्चादेकांतेवास्त्रियासह सेवनंमैथुनादी
नांवदंतिमुनिपुंगवाः ३९ ऋतुकालापुत्रार्थीआधानविधिनाद्विजः प्रसाधशयनात्योनिमितिमंत्रनिदर्श
नात् ४० कृत्वाभीनविधानंतुस्त्रीयोगमभ्यसेत्तुनः नवेदविकृतोयोनौविकाराद्विकृताःप्रजाः ४१ ब्रह्म·
मुहूर्तमुत्थायप्रातःसंध्यामुपक्रमे आसूर्यदर्शनात्संध्यासायंचैवार्कदर्शनात् ४२ बहिःसंध्यामुपासीत

४३ अनृतंमद्यगंधंचादिवामैथुनसेवनं पुनातिवृ
उदयेस्तमयेप्यानोस्तावत्संध्येतिस
सीमंतोन्नयनं षष्ठेकार्यंमासेष्टमेपिवा ४६ जातस्यजा
दिनेचैकादशेनामशर्मादिद्विजजन्मनां ४७ तुर्येनिःक्रमणेमासिषष्ठेनप्रा
चूडाकर्मतृतीयेब्देकार्यंवाकुलधर्मतः ४८ स्त्रीणांसर्वंविमंत्रंस्यात्कार्यंकायविशुद्धये यस्यन
स्युर्द्विजस्यैताःक्रियायदिकथंचन ४९ सर्वान्यःसर्वथात्याज्योद्विजोयस्माद्द्विजन्मनः मुंजमौर्वशणानांच
त्रिवृतारशनास्मृता ५० कार्पासशणमेषोर्णान्युपवीतानित्रिवृंति पालाशवटपीलूनांदंडाःक्रमशोमताः ५१
कार्पांचरौरवंबास्तमजिनानिद्विजन्मनां शिरोललाटनासांताःक्रमाद्दंडाःप्रकीर्तिताः ५२ अव्रणास्त्वचोद
यथाउक्ताःशुभकरानृणां गायत्र्यात्रिष्टुजगत्यानत्रयाणामुपनायनं ५३ गायत्र्यामविशेषोवामुंजादिष्वपरेषु
च तत्सवितुर्वृणीमहे त्वा क्रमात् ५४ उपनायनिकामंत्राविप्रादीनामुदाहृताः ब्राह्मणोवि
प्रगेहेषुनृपस्त्वेषूत्तमेषुच ५५ वैश्योविप्रनृपस्तेषुकुर्याद्भिक्षांसुवृत्तये एकान्नेनद्विजोश्नीयाद्ब्रह्मचारिव्र
तेस्थितः ५६ भिक्षावृत्तिर्द्विजातीनामुपवाससमास्मृता प्रतिग्रहोनभिक्षास्यान्नतस्यापरपाकता ५७
सोमपानसमाभिक्षा ततोश्नीयात्सभिक्षया भिक्षयायस्तुभुंजीतनिराहारःसउच्यते ५८ भिक्षामनभियास्ते
षुसाचारेषुद्विजेषुच भिक्षेतभिक्षांक्रमशोगुरोःकुलंविवर्जयेत् ५९ स्वसारंमातरंवापिमातृस्वसारमेवच
भिक्षेतप्रथमंभिक्षांयाचान्यानविमानयेत् ६० भवतिभिक्षांमेदेहि भिक्षांभवतिदेहिमे भिक्षांदेहिमेभव

त्रिकर्मणांतद्वाहरेत् [illegible] द्वादशाद्ब्रतंधार्यंषडब्दंवाश्रुतिंप्रति अधीत्यार्थोतत्जेत्तद्वेदलाब्धुरवेवरं ६२ य
थमुस्नातकाःप्रोक्ताविद्याव्रतोपसेविनः विद्यांसमाप्ययःस्नायाद्विद्यास्नातकउच्यते ६३ अब्देकृद्वादशाब्दा
निगर्भाणिद्विजन्मनां मुख्यकालोव्रतस्यायमन्यउक्तोविपर्यये ६४ द्विगुणाब्देतुकर्तव्याकृसाद्युपनतिर्द्विजे
द्वैव्रत्यावधिकव्रात्याउक्तकालादनंतरं ६५ नाध्याप्यानैवचोद्वात्याव्यवहारविवर्जिताः नायाज्यानार्यकार्येषुप्र
शस्यास्तेदर्शनेवृथा ६६ स्त्रीवन्निर्लोमवक्त्रायेनिर्लोमदेहवक्षसः उग्रोरसोनपत्याश्च अदृश्यास्तेपिगर्हिताः
६८ अन्नस्यापिदितंकुर्युः प्राभुयुक्तेरादायुगं दीर्घायुस्त्वंप्रजावत्त्वमरोगित्वंयशोदिवं ६९ क्षीणायुस्त्वंदरिद्र
त्वमभक्ष्यभक्षणोधिनां गर्हितत्वंचलोकेषुभोक्तुर्निषिद्धकारिणां ७० प्रातर्वायदिवासायं नाद्यादन्नमनर्चितं
नानाद्यमनर्चितान्नंगृहस्थःशुद्धिजःसदा ७१ आपोशानंविनानाद्यान्नाद्यादन्नमनर्चितं अनाद्यंनदिवासायं
गृहाभिन्नमन्नमिवामृतं ७२ षोडशाब्दादिविप्रस्यद्वाविंशतिर्नृपस्यच चतुर्विंशतिरन्यस्यव्रात्यास्तेस्युरतःपरं
७३ अनंतरान्तरापन्नाव्रात्याःशूद्रधर्मिणः व्यवहार्यानवाज्याइतिधर्मविदोविदुः ७४ स्त्रीणांस्युब्राह्मण
संबंधिनःपतनोविधिः स्त्रीपुंसयोश्चविन्यासस्तयोरन्योन्यमुच्यते ७५ स्वस्मिन्यस्माद्विभर्त्येषापतिर्वि
गर्भिणीनां भर्तागर्भयोनगतांत्रलव्रवेदोनिदर्शनं ७६ पतिर्विशतियज्जायांगर्भोभूत्वेहमातरं तस्यांपु
नर्नवोभूत्वादशमेमासिजायते ७७ जायोक्तातेनवैजायायदस्यांजायतेपतिः यद्भ्रमभवत्भार्याबीजम
वाप्निनित्यतं ७८ देवाऋषयंगणाद्धिशार्यापजननीत्वतः आत्मनाजायतेत्रात्मासेशापत्यविधारणी७९
गार्भोजायाजनन्यांगर्भदर्शोपिता पुन्नाम्नस्त्रायतेयस्मान्नरकात्पुत्रमुच्यते ८० यःपिताजातपुत्र

ातिब्रह्मणः पदं ८१ तेनयासंफलंसर्वमैहिकामुष्मिकंचयत्
ाभाधिभिः ८२पुमांसःपुत्रानिच्छंतुतेवैलोकेपराहसः प्राणोन्तमपिमन्यार·
शवोविवाहाः जायासखावाकृपणंहिपुत्राज्योतिःपरंपुत्रइहाप्यमुत्र ८३सपुण्यकृत्त
त्राश्चिरायुषः विशेषेणापिधर्मज्ञास्तपरंब्रह्मविंदति ८४पुत्रेणप्राप्यतेस्वर्गोजातमात्रेणानि·
तस्मादिच्छंतिसर्वेपिपशवोपिवयांस्यपि ८५जायायास्तद्धिजायात्वंयदस्यांजायतेपुनः पुत्रस्यापि·
पुत्रत्वंत्रायतेनरकाणंवात् ८६यःपितासतुपुत्रःस्याज्जायैवहिजनन्यपि नपृथक्त्वंविदुस्तत्रास्तयोश्चा
योरपि ८७अयंहिपंथाःपुरुषस्यतस्यध्रुवंभवेत्पुत्रजनिर्हियस्य तद्धीस्यचोर्ध्वंपशवोवयांसिपुत्रार्थिनो
तरमाशुहंति ८८जनिष्यमाणानिच्छंतिपितरःस्वकुलेसुतान् कश्चिद्गत्वागयायांनोवंशोपिंडान्प्रदास्य
८९यस्त्वन्योऽश्वमेधेननालंमोक्षितवाहृषं दानदोवाकुरुक्षेत्रेज्ञानीवाथभविष्यति ९० शुद्धशौर्यैकस्वि
ाहिमाणान्मोक्षतिगोगृहे एष्टव्यांपितृभिःसर्वंपुत्रेभ्यःसकलंफलं ९१ जीवतोवाक्यकरणात्क्षयाहे भूरि·
जनात् गयायांपिंडदानाच्चत्रिभिःपुत्रस्यपुत्रता ९२पुच्छेशिरसियःशुक्लःशुक्लपाल्लोहितवपुः देवा
ीष्टोनीलोयमुत्सृष्टःपावनोवृषः ९३ रक्तकृष्णोपिवाशुक्लस्तुविषाणःशुभिक्षणः योनहीनातिरिक्तांगो
तंवासमुत्सृजेत् ९४दुहितापितथासाध्वीश्वशुरयोरुपास्तिकृत् पतिव्रताचधर्मज्ञासिन्नोत्युंकृतिकृ
तन् ९५सापितासतुवैपुत्रस्तसमाद्दुहितापिच पुत्रश्चदुहिताचोभौपितुःसंतानकारकौ ९६तत्सुतःपा
हंशास्त्रींश्चमातामहादिकान् दौहित्रःपुत्रवस्तस्मर्यउक्तोशास्त्रेषुतोऽसतो ९७आधानादिकसंस्काराः

तस्मात्तस्यनदातव्यंसहदात्रासमज्जति १५ यथाभस्मतथामूर्खोविद्वान्प्रज्वलिता
१६ यथाशूद्रस्तथामूर्खःशूद्रस्येवचभस्मवत् शूद्रे
१७ गृहीतायोनचोद्विद्वान्तदातारोहिकोयथा आत्मानंतारयेत्तंचनदी
वैतरिणींद्विजः १८ योमूर्खोपिसदाचारःषट्कर्मनिरतःसदा सनयेत्स्वर्गमात्मानंद्वांश्चैवनपीडयेत् १९
नविद्यानतपोयस्यआदत्तेचप्रतिग्रहं आददानस्त्वनाचारोदातारमपिवर्जयेत् २० तिलान्स्वर्णंचगांभूमि
मविद्वानाददातियः भस्मीभवतिसोन्हायदातुःस्यादफलंचतत् २१ तस्मादविद्वान्नादद्यादल्पशोपिप्रति
ग्रहं विपत्स्वपिरज्ञानीविषेणात्मेननश्यति २२ सर्वंगवादिकंदानंपात्रेदातव्यमर्चितं विद्वद्भिर्नत्वपात्रेषु
गतिमिच्छद्भिरात्मनः २३ हस्तिकृष्णाजिनाद्यास्तुगर्हितायेप्रतिग्रहाः सद्भिस्तान्नगृह्णीयुर्गृह्णंतस्तु
पतंतिते २४ कृष्णाजिनप्रतिग्राहीहयानांशुकविक्रयी नवश्राद्धेषुयोभोक्तानभूयःपुरुषोभवेत् २५ यो
गृह्णातिकुरुक्षेत्रेग्रामंगांद्विसुवर्णंद्वयं नवश्राद्धान्नशुक्रंचवर्ज्यानिसोल्यवाद्विजाः २६ एतेषांसंधता
भिस्त्वंयावन्मनुसहस्रकं २६ विद्याश्चवान्हश्चचराश्चजातापृथ्वीचराजश्चसुनोशगोश्च कालेसुपात्रे
विधिवत्प्रदत्ताप्राप्नोतिलोकत्रयमेतदुक्तं २७ वेदविद्वान्सदाचारःसदातिष्ठतिसन्निधौ भोजनेचैवदाने
भोजनेचैवदानेचाहिनस्त्यास
... २८ अन्यासन्नमधीयानंब्राह्मणंयोव्यतिक्रमेन

दु प्रोक्तप्रतिग्रहाणांभयात्मांगृहदापदि विप्रोश्नन्प्रतिगृह्णन्वायतःस्यातापिनाघभाक् ३१ गुर्वादर्पा·
न्ववगांयंदेवाद्यर्थंनरावंतः प्रतदेयाद्विजान्यस्तुभृत्यर्थेचात्मनोपिच ३२ दधिक्षीराज्यमांसानिगंधपुष्पां
गुमन्यकान् शय्यासनासनंशाकंमत्सस्वेयंनकर्हिचित् ३३ अपिदुष्कृतकर्मस्यसमायातमयाचितं प्रति
नेग्राह्यतदानेभ्यःप्रतिग्राह्यमसंशयं ३४ शक्तःप्रतिगृहीतुंयोवेदहस्तःसुसंहतः दीयमानंनगृह्णातिस्वर्गत
स्यालाकंफलं ३५ प्रतिग्रहभृणंचापियाचितंयोनयच्छति सकोटिगुणितग्रस्तोभृतोदासत्वमृच्छति ३६ प्रदा
तानरागंदानंप्रतिग्राह्यानयान्विते तावुभौनरकंयातौदाताचापिप्रतिग्रही ३७ अपात्रस्यहियद्दत्तंदानमल्प
मपिद्विजैः गृहीतातल्लाणाद्यातिशरसमल्पमविचारतः ३८ वदंतिमुनयःकेचिद्दानप्रतिग्रहंप्रति प्रत्यक्ष·
लिंगमेकस्याद्दातृयाचकयोरिह ३९ दातेहस्तोभवेदूर्ध्वंगृहीतुश्चभवत्यधः दातृयाचकयोर्भेदः कराभ्या·
मेवलक्षितः ४० शूद्रादीनांचतुर्णांतुनयानिंदितभूपते नविद्वान्प्रतिगृह्णीयात्प्रतिगृह्णन्व्रजत्यधः ४१
दृष्याद्वाणंशूद्रान्नात्पात्रविभयकृत् वेश्यानिपिद्धनृपतिःप्रतिग्रहपरःक्रमात् ४२ परपाकंवृथा·
मांसंदेवाग्निगृहिदूषितं अनुपाकंवृथामांसंनपस्यंलशुनादिकं ४३ नभोक्तव्यमभोज्यान्नंकंदमूल·
फलादिकं नपानव्यमपेयंनाद्विजैरत्यंतगर्हितं ४४ सत्ययुक्तंसदाब्रूयाच्छनैर्धर्मंसदाचरेत् यमान्सं
नियमान्कुर्वाद्वादंस्थंव्रतमाचरन् ४५ मातृपितृनुपाध्यायाञ्गुरून्वृद्धान्सदार्चयेत् एतान्वृद्धांस्तथा
न्यान्नित्यंनिर्भाभिवादयेत् ४६ दम्भंनसर्वदाकुर्याद्दानंशक्त्यासदैवहि दयांजंतुषुकुर्वीततद्धीनो
नरकाश्रयः ४७ शाद्विजानांनरस्यान्नंदानंदत्तसदाजनाः दयध्वमपिचैवैषांश्रुतिर्वाजसनेयिकी

नंदिवि ददद्देतिदमंदानंयदोभितिचशिक्षयेत् ४९ रसा रसैः समा
या रसैर्नलवणंग्राह्यंसमतोहीनतोपिच ५० तिला अपिसमादेयाधान्यैरन्यैर्द्विजा
नतेयंत्रेण नष्पीड्याब्रूयुरेतन्मनीषिणः ५१ विक्रयव्यपदेशेनदुग्धदध्यादिसर्पिषां लोभात्कु
र्जन्मायः सतुशूद्रसमस्स्मृतः ५२ शुश्रूषान्नतिरस्कुर्यादुपास्यान्नावधारयेत् नानिंदेच्चसमभ्यर्च्यो
न्विक्रीणितगर्हितान् ५३ अदेयानिनवेदद्यात्त्याज्यानिनवैत्यजेत् अभाष्यान्नैवभाष्येत हीनांगाद्यां
श्वनक्षिपेत् ५४ नसंवदेच्चपित्राद्यैः पतिताद्यैर्नसंवसेत् नमतिंनीचवर्णायदद्यादुच्छिष्टमेववा ५५ मतिं
शूद्रस्ययोदद्यान्नरकंप्रतिपद्यते नतस्यकिंचिदाख्येयंव्रतादिनियमादिकं ५६ आचक्षाणस्तुतच्चसंनर
कान्नोपपच्यते नाद्यादन्नंनिषिद्धस्थंसंध्याशय्यार्धरात्रिषु ५७ वेदविद्यादियानानिनविक्रीणीतकर्हि
चित् नापत्यानिनसद्यानि भूहत्तिंचान्वयेसति ५८ नापः पिबेच्चपाणिभ्यांनकंडूयतिकूर्द्वेत् विदिक्ष
सशुदग्यस्तुशयीतान्हानसंध्ययोः ५९ पादुकादिनपालाशंनवृक्षादिनिकृंतनं नोत्साययेद्दीवनाद्यंतुन
कदाचिद्द्वादिषु ६० पद्भ्यांस्पृशान्नवाद्यंनानोच्छिष्टोनचतद्गतिः नलंघ्यावत्सतंत्राद्यावास्वर्गोनात
रागतिः ६१ नद्वयोर्विप्रयोर्नारुन्याः सौरभ्योर्नपतिस्त्रियोः विप्राग्न्योर्विप्रपिंडानांनोग्रोष्ट्योर्विष्णुतार्क्ष्य
योः ६२ सौरभेयोर्नलाग्न्याश्च माहेयीजलयोरपि मातुर्व्योमादिकानांतुनकुर्यादंतरागतिं ६३ भोज
नादिषुसक्तानांनपश्येद्दिगतांशुकं नगच्छेत्स्त्रीजनैर्युक्तअश्नीयान्नतयासह ६४ उत्तरीयंविना
नैवनननग्नोनशयीतच नामेहच्चैवमार्गादौनानिषिद्धकुकुस्वः नोपगंगामराचौदिनविषा

दिगृहांतिके अतिकालादियानेचशुभमिच्छन्विवर्जयेत् ६६ ज्येष्ठेंद्रचापरुद्रायामूलनाम्नानिर्दि
शेत् इंद्रचापंधयंतीगौनरिव्यातव्यंपरस्यतं ६७ वर्जयेद्धावनेचैवपादयोःकांस्यभाजने पैशून्यंम
र्मभेदंचनवदेन्म्लेछभाषितम् ६८ प्राकृतंचकुशास्त्राणिपाखंडहेतुकानिच नश्रोतव्यानिविप्रेणाया
तनाकारणानिच ६९ नकरंमस्तकेदद्यान्नकरेमस्तकंतथा नजानुनोःशिरोधार्यंनप्रावृतशिराश्चभ
त् ७० वेदाश्ववन्ह्याश्चकदर्यचौरक्लीबाभिशस्तागणिकातुयाच योग्रहूजीवागणदीक्षकायेनभोज्यमे
षामशनंद्विजेन ७१ क्रूरानराःक्रूरचिकित्सकायेयापुंश्चलीयोंचविरोधिशत्रू व्रात्योग्रमर्त्यामिहिला
जिनाश्चस्यात्नाद्यमेषामशनंद्विजेन ७२ येदांभिकायेचसुवर्णकाराउच्छिष्टभोजीपतितश्चयश्च येवि
प्रभार्यावहुयाजकायेविप्रस्यचैतेपिनभोज्यधान्याः ७३ यःसोमशस्त्रास्त्रकृतांश्रुतक्षीराज्यमांसंलव
णाजिनानि क्षौमानिभिक्षांश्चतिलान्फलानिविक्रेतुरेषामशनंनभोज्यम् ७४ जीवंतिवृत्यारसदानपानांक
र्मारकायेपिचतंतुवाद्याः राजानृशंसोरजकःकृतघ्नोभोज्याशनानैवविहिंसकाश्च ७५ येतैलधारासुसु
राकृतायेपैशून्यवाचोवितथंवदाश्च येबंदिनोयेपिचचाक्रिकाश्चविप्रस्यचैतेपिनभोज्यसस्याः ७६ म
द्यासनंमधूच्छिष्टंदधिक्षीररसौदनाः मनुष्योपलपूपाश्चकुशमृत्पुष्पवीरुधः ७७ कौशेयकेशकुत
पाविषनीररसास्तथा शाकैकशफपिण्याकगंधानौषधिमूलकान् ७८ विक्रीणंतियएतानिवस्तूनिम
नुजाधमाः तेषामन्नंनभोक्तव्यंसहोपपतिवेश्मनः ७९ योपथ्यस्यकदर्यस्यभुंजीतान्नंद्विजाधमः त
स्माच्छूद्रवत्सस्यान्मृतोविट्सूकरोभवेत् ८० योन्नंवार्धुषिकस्याद्यादजापालादिकस्यच अन्यस्या

८१ पाणिगृहीतभार्यायोसत्यांयस्तुनराधमः शूद्रीहस्तेनभुंजीतपति
८२ त्यक्तायेनोढभार्यातुत्यक्तःसपितृदैवतैः त्यक्तादेवैःसपापीयान्शूद्रादप्यधमः
८३ यःशूद्रींभजतेनित्यंशूद्रीचगृहमेधिनी वर्जितःपितृदेवैश्चरौरवंयात्यसौद्विजः ८४ यःशूद्र्यां
नस्वयंजातोयोन्यस्यांवासमुद्भवः अन्यस्यांवाभवेत्सोपितस्यकिमेत्यचिंतितम् ८५ सर्वान्भुंजीतनरका
न्विंशतिप्वेनवर्जनात् रौरवाद्यान्क्रमेणैतान्यावदंबरम् ८६ हेमंतशिशिरर्तौचप्रोष्ठपद्यांपर
स्यच पंचत्वपरपक्षेतुकार्यासाग्निभिरष्टकाः ८७ हेमंतशिशिरेचैकातथैकैकापराथवा प्रोष्ठपद्यादि
अष्टकाइतिकेचन ८८ दर्शश्चपूर्णमासीचतथैवाग्रयणद्वयम् चातुर्मास्यव्रतान्येवकार्याणिसा
: ८९ अनूचानकुलेजाताःसदैवव्रतचारिणः अग्निहोत्ररतानित्यंमातृपित्रादिपूजकाः ९०
: वृत्तवंतश्चयेविप्राःस्नातकास्तेप्रकीर्तिताः ९१ संक्रांतयोः
: शुभर्क्षदिनयोगाश्चकार्याःसाग्निभिरष्टकाः ९२ नशूद्राद्भिक्षितेनैवकर्तव्यंकर्मस
: चंडालत्वमवाप्नोतियज्ञार्थंशूद्रयाचकः ९३ लब्धंयज्ञाययोविप्रोनदद्याद्यज्ञकर्मणि सभासःका
कोगृध्रोवाश्मशानेनिर्जलेभवेत् ९४ शिलोंछवृत्तिर्विप्रःस्यादथवैकाह्निकाशनः
भीकुसूलधान्यकः ९५ पूर्वःपरतरःश्रेयानेषांसद्भिःप्रकीर्तितः सोमपःस्याच्चिवर्षान्नस्तत्पूर्वकृत्समाशनः
९६ सोमेष्टिंपशुयज्ञांश्चकुर्वीतप्रतिवासरम् इष्टिर्वैश्वानरीयातुकर्तव्येतदसंभवे ९७
तांनकुर्याद्धीनदक्षिणाम् तत्कृतंतुभवेद्व्यर्थंप्राप्नुयात्सशुयोनिताम् ९८

भिंनम यान्नंनापिदातव्यंयच्चाशृतंथनंनरैः २९ शूद्रान्नंब्राह्मणोभुक्त्वामासंमासार्द्धमेववा नद्योनावेवजा
यंतसत्यमेवंविदुर्बुधाः ३० आशूद्रस्यशूद्रान्नोमृतःश्वाचोपजायते दशाहाद्दशवर्षोवागृधशूकरपुक्क
सः१ उदरस्थितशूद्रान्नोयोधीयानोपिनित्यशः जुह्वन्नापिजपन्वापिगतिमूर्द्धांनविंदति २ अमृतंब्राह्मण
स्यान्नंक्षत्रियान्नंपयःस्मृतम् वैश्यस्यचान्नमेवान्नंशूद्रस्यरुधिरंस्मृतम् ३ आमंशूद्रस्यशूद्रान्नंपक्वमु
च्छिष्टमुच्यते तस्मादामंचपक्वंचशूद्रस्यपरिवर्जयेत् ४ कणभिक्षांनिराकुर्याद्यदिकुर्याद्दृष्टकः सच्छू
द्राणांगृहंकृत्वंनतद्दोषेणलिप्यते ५ निशुद्धान्नपसंभृतोनिवृत्तोमद्यमांसतः द्विजभक्तोवणिग्वृत्तिः स
च्छूद्रः परिकीर्तितः ६ उदक्यास्पृष्टसंघुष्टंवीक्षितंचाप्युदक्यया श्वस्पृष्टंशकुनोच्छिष्टंप्रयत्नेनविवर्ज
येत् ७ उच्छिष्टंचपदास्पृष्टंशुक्तंचपतितेक्षितम् पर्युषितंविरस्यंचकेशकीटादिदूषितम् ८ पंक्त्युच्छि
ष्टंगणान्नंप्रयत्नेनविवर्जयेत् नाश्नीयात्तदन्नंयदि भिच्छंतोद्विजातयः ९ शूद्राणामपिभोज्यान्नाः कु
दभिन्नापितादयः शाक्लेनगवांतभोज्यंनिरस्यमपिचद्रवेत् १० अनाहूताअपिभोज्याः स्युः सद्यश्चितप
तादयः गर्भिणीवत्सशूतस्यागवादेवर्जयेत्पयः ११ स्त्रीणामेकशफोष्ट्रीणांतथारण्यकमाविकम् प्रसूता
भ्रात्वर्णागौस्त्वमहिष्याः गाक्षवैवत्र १२ दशरात्रेणशुद्ध्यतिभूमिसंस्थंनवंपयः शाकादिकंचविज्ञातंकवक्र
मिननवर्जयेत् १३ मांसंक्रीडादिनाजुष्टंप्रयत्नेनपरित्यजेत् येनयःक्रव्यमश्नातितथाविधाशुजन्मये १४ शु
कादींश्चपदानखाः कपोतपिकसारिकाः सेधाप्रांश्चपंचनखान्सिंहाद्यान्मत्स्यकांस्तथा १५ धर्मशास्त्रा
दिनांगालायाांशान्वर्जयेत् मत्स्यमाणालयेमांसंस्याद्दुयज्ञोत्सवेष्वपि १६ यत्रवातत्रवाकालेना

यदेवाभिषसंपत्तिस्तथैवामंत्रयेद्द्विजान् १७ कृत्वाचविधिनाश्राद्धंपश्चात्तत्त्वयमश्नुते
नाद्यादविधिनामांसंमृत्युकालेपिधर्मवित् १८ भक्षयेन्नरकेतिष्ठेत्पशुरोमसमाःसमाः गृहस्थोपिहियो
नाद्यात्तिशितंतुकदाचन १९ ससाक्षात्साधुभिःप्रोक्तोयोगीचब्रह्मलोकगः नस्वयंतुपशुंहन्याच्छ्राद्धका
लेप्युपस्थिते २० क्रव्याद्यैःसारमेयाद्यैर्हतंमृगादिकंहरेत् इदंशाकवदिच्छंतिपवित्रंमुनिसत्तमाः २१
यस्ययस्यस्यादन्नंदेहीतिदेहिनः सतदत्तिनिरातंकोलोकदृष्टंनिगद्यते २२ अन्नादेरपिभक्षस्यस्नेहमध्याभि
पस्यच महाफलानिवृत्तिःस्यान्निवृत्तिःस्वर्गसाधना २३ एकोप्यंशतमन्वेनयजेतपशुनाद्विजः नान्यस्तुमांस
मश्नातिस्वर्गभाक्स्तयोःसमा २४ हेमराजतशंखानांपात्राणांवैणवस्यच चर्मणोरज्जवस्त्राणांशुद्धिर्भवति
वारिणा २५ स्रुगादीनांयज्ञपात्राणांधान्यानांवाससामपि अन्येषांचयरूपाणांप्रोक्षणाच्छुद्धिरिष्यते २६ मार्जे
नान्यत्रपात्राणांहस्तेनमखकर्मणि अंभोजमंत्रकेरूप्येःशुध्यतःकौशिकाविके २७ श्रीफलैरंशुपट्टा
नांसारिष्टैःकुतपस्यच मृन्मयानिपुनःपाकैःक्षौमाणिसितसर्षपैः २८ शुध्येतकारुहस्तस्थंपण्यशुद्धं
प्रसारितम् भैक्ष्यस्यप्रोक्षणाच्छुद्धिःसंस्पृष्टिःस्यान्नयत्रतु २९ स्त्रीमुखंतुसदाशुद्धंभूमिलेपविवर्जिता
९ : ३० द्रव्याणिचैवशुध्यंतिवन्हिनाप्लवनेनच क्रव्यादाद्यैर्हतंमांसंसर्व
दाशुचिकीर्तितम् ३१ नृसिंहकृत्सौरपोष्याश्वस्तथावस्थंमहागतम् वदंतिसुरयोवारिपवित्रमितिसर्वदा ३२
गोर्वन्हिर्भानवश्छायाजलमश्वंवसुंधरा विप्रुषोमक्षिकावायुर्नदुष्यंतिकदाचन ३३ शुचिःप्रस्रवणेव
त्सःकृतयाजाश्वौसुखेशुनी नतुगोमुखतोमेध्यानचगोमुखजामलाः ३४ सोमभास्करयोर्भाभिः

संसर्गंवर्जयन्स्यादकिल्विषी ९ वदंतिमुनयःप्राच्याःसंसर्गंदोषकारणं असंसर्गःस्वकर्मस्थो
द्विजोदोषेर्नलिप्यते १० दानोद्वाहेपिसंग्रामे देशविप्लवकादिषु सद्यःशौचंद्विजातीनांसूतकाशौ
चयोरपि ११ दातृणांव्रतिनामेकैकवयःसनृणामपि सद्यःशौचमदोषाणामूचुर्धर्मविदःकलौ
११ सर्वमंत्रपवित्रःस्यादग्निहोत्रीषडंगवित् राजाचश्रोत्रियश्चैव सद्यःशौचाःप्रकीर्तिताः १२ दे
शांतरगतेजातेमृतेवापिसगोत्रिणि सत्यप्येकनिवासेतुसद्यःशौचंविशोधनं १३ सद्यःशौचंविधा
तव्यसर्वांत्यरानजन्मनः वाथवादिषुविज्ञेयमन्यदूर्ध्वंविधीयते १४ नाशौचसूतकेस्यात्तांनृपतौ
गोकुदाचन यज्ञकर्मप्रवृत्तस्यऋत्विजोदीक्षितस्यच १५ पृथक्पिंडेमृतेबालेनिर्देशेन्यत्रचश्रुते
जातेनापिविशुद्धिःस्यात्सद्यःशौचादसंशयं १६ सवेदस्याग्निरेकाहाद्ब्राह्मणःशुद्धिमाप्नुयात् त
थैकाहोनृपेसंस्थेनयेवब्रह्मचारिणि १७ दुर्भिक्षेराष्ट्रभंगेचविपत्कालउपस्थिते उपसर्गमृते-
चापिसद्यःशौचंविधीयते १८ गोद्विजार्थेविपन्नानामाहवेषुगतासुषां तेषांगोभिःसमाज्ञेयाः
सद्यःशौचाःप्रकीर्तिताः १९ विप्रेसंस्थेव्रतादर्वाक्श्रोत्रियेचद्विजेमृते अनूचानेगुरौचैव आचा
र्येचापिसंस्थिते २० स्त्रीणामसंस्कृतानांचश्रोत्रियेचनृपेमृते त्रिरात्रमेवशौचंस्यात्तथैवोद
कदायिनां २१ विद्वाननग्निकोविप्रस्त्रिरात्राच्छुद्धिमाप्नुयात् मनीषिणोपरेप्राहुरसपिंडेत्र्यहंत्र्य
हं २२ प्रेतीभूतंचयःशूद्रंब्राह्मणोज्ञानदुर्बलः अनुगच्छेन्नीयमानंत्रिरात्रमशुचिर्भवेत् २३ षट्
रात्रंनपरान्नंचशवस्पृश्याविशुद्धिकृत् अहश्चैवविशुद्ध्यर्थंधर्मशास्त्रविदोविदुः २४ अनाथंब्राह्म

यश्चित्तमथोच्यते ५७ मनुर्याज्ञवल्क्यस्तु वसिष्ठः प्राह निष्कृतिः साकृतादिस वर्णानां सति धर्मे
चतुष्पदे ५८ मानसा वाचिका दोषास्तथा ये कायकारिताः धर्माधीना नृणां सर्वे जायंते ते ष्यनिछ
तां ५९ ते पसुपरता क्षाणा अत्यहं शुभमिच्छतां शक्तिजो निष्कृतिं प्राह युगधर्मानुसारतः ६० विष्कृ
तव्यवहाराणां पापो निष्कृतिकृद्द्विजः कतिविप्रैः कथंरूपैरितिवाच्या भवेदिसा ६१ तद्रूपंचप्रवक्ष्या
मि सा यावद्भिर्द्विजैर्भवेत् यथाविधाश्च विप्रास्तु रिति विद्भिः प्रकीर्त्यते ६२ पर्षद्दशावरा प्रोक्ता ब्राह्म
णैर्वेदपारगैः सायद्रूपा स धर्मः स्यादिति यम्भूरित्यकल्पयत् ६३ वेदशास्त्रविदो विप्रा यं ब्रूयुः सप्त पंच
वा त्रयो वापि स धर्मः स्यादेको वाध्यात्मवित्तमः ६४ संयमं नियमं वापि उपवासादिकं च यत् ताद्
रा परिपूर्णा स्यान्निष्कृतिर्व्यवहारिका ६५ नलक्षेणापि मूर्खाणां नचैवाधर्मवेदिनां विदुषां नापि
लुब्धानां नचापि पक्षपातिनां ६६ श्रुताध्ययनसंपन्नः सत्यवादी जितेंद्रियः सदा धर्मरतः शांतः ए
कः पर्षत्वमर्हति ६७ नसा वृद्धैर्न तरुणैर्न सुरूपैर्धनान्वितैः त्रिभिरेकेन पर्षत्स्याद्द्वाद्विद्वद्भिर्विदुषापि
वा ६८ वयसा लघवो पि स्युर्वृद्धा धर्मविदो द्विजाः शिशवोपि हि मध्यस्थाः सर्वत्र समदर्शनः ६९
नसा वृद्धैर्भवेद्विप्रैर्वृद्धास्तु ब्रह्मवादिनः यत्र सत्यं स धर्मः स्याद्यच्छलं तन्न गृह्यते ७० नसा सभा
ः वृद्धा न ते येन वदंति धर्मं नासौ धर्मो यत्र नो सत्यमस्ति नो तत्सत्यं यच्छलेनानु
विद्धं ७१ निष्कृते व्यवहारे च प्रनस्या शंसनेतया धर्मं वा यदि वाधर्मं परिषद्यावहत्तद्भवेत् ७२ प्र
विश्य पर्षदं ते वै सभानामग्रतः स्थिताः यथाकालं प्रकुर्युस्ते प्रायश्चित्तं तदीरितं ७३

चतेदेवावदंतेत्रद्विजातयः सर्वेकुर्वंतिनियतंगतपापंनसंशयः ७४ प्रसादोद्विविधोज्ञेयोदैत्यश्चा
सुरएवच क्रीडयापिचतत्रैवदेवास्तथैवतेद्विजाः ७५ व्यवहारेगोसभेस्तुप्रब्रूयाद्वापितेरतः य
थाकृतंचयसापंतथैववाविनिवेदयेत् ७६ यस्तेपामन्यथाब्रूयात्सपापीयान्नसंशयः सत्यमसत्यमे
वात्रविपर्यस्तंचवेदितः ७७ सएवानृतवादीस्यादनंतेनरकेव्रजेत् ज्योतिषंव्यवहारंचशायाश्चि
त्तंचिकित्सितं ७८ अजानन्योनरोब्रूतिसाहसंकिमतःपरं व्यवहारस्मृतेःप्रोक्तोमन्वाद्यैर्धर्मवा
दिभिः ७९ प्रजाभिर्नतुसर्वाभिर्मान्यश्चैवतुमानवैः तच्छोधकप्रमाणानिलिखितादीनितोवि
ना जलादीनिचदिव्यानिसाख्योक्तशपथानिच ८० अन्येजनपदाचाराअप्युधर्मस्तथापरः प
रिपद्ब्राह्मणेसंध्यानिर्णेतव्यायथाविधि ८१ नान्यजात्यनुसारेणदेशकालादिधर्मतः कर्तव्यंसत्त
मैःसर्वैःमाननीयोविवादिभिः ८२ गोब्राह्मणहतादीनांतथादंशादिकारिणां नसकृच्छ्रेणशुद्धिः
स्यादितिपराशरोब्रवीत् ८३ भोजयेद्ब्राह्मणान्यत्नात्सवृषागोश्चदक्षिणा जायंतेपापनिर्मुक्ताः
शक्तिसूनोर्यथावचः ८४ अनाशकान्निवृत्तायेब्रह्मचर्यात्तथाद्विजाः विडालिकास्तेविज्ञेयाःस
र्वधर्मविवर्जिताः ८५ सर्वेप्रवेशितायेयेचवैडालिकैःसमाः तेषांसर्वाण्यपत्यानिपुल्कसैःसह
घातयेत् ८६ स्त्रीणांचबालवृद्धानांक्षपिणांकुशरीरिणां उपवासाद्यशक्तानांकर्तव्योनुग्रहस्मृतेः
८७ ज्ञात्वादेशंचकालंचवयःसामर्थ्यमेवच कर्तव्योनुग्रहःसद्भिर्मुनिभिःपरिकीर्तितः ८८ लो
भान्मोहान्भयान्मैत्र्याद्यदिकुर्युरनुग्रहं तेमूढानरकंयांतिशनधाग्रामपातकाः ८९ ब्रह्मभस्व

सुरापश्चस्तेयीगुर्वंगनागमः एतेषांनिष्कृतिंब्रूयादेतत्संसर्गिणामपि १० द्वादशाब्दानिविच
रेद्ब्रह्मस्तत्कपालभृत् सर्वत्रख्यापयन्कर्मभिक्षांविप्रेषुसंचरन् ११ हत्वासेतुंसमुद्रस्यस्ना
त्वावेलवणांभसि ब्राह्मणेषुचरेद्भिक्षांस्वकर्मख्यापयन्शुचिः १२ मुंडःसन्सशिखावर्जःसकोपि
नोनिराश्रयः चीरचीवरवासावैत्रिःस्नायीसन्शुचिव्रती १३ वीताक्षश्चचरेच्छांतः छत्रोपान
द्विवर्जितः ब्रह्मघ्नोस्मीत्यहंवाचमितिसर्वत्रवैवदेत् १४ गवांचविंशतिंदद्याद्दक्षिणांवृषसंयुतां
ब्राह्मणेभ्योनिवेद्यैताः शुचिरास्थायभूपतेः १५ परोक्षंप्रत्यवसितोप्रायश्चित्तमिदंस्मृतं ब्राह्म
णानांप्रसादेनतीर्थंयुगमनेनच १६ अवभृथेऽश्वमेधस्यस्नात्वाशुद्धिमवाप्नुयात् आख्यायन्
पतेर्वापितेनसंशोधितःशुचिः १७ महापापानिसर्वाणिकथयित्वामहीपतेः निष्कृतिंनाद्रि
यादन्यथातेपितत्समाः १८ रोगार्तांगांगुरुंवापिमार्गेखेदसमन्विते हत्वाकृत्वानिरातंकांब्रह्म
हाशुद्धिमाप्नुयात् १९ असंख्यातंधनंदत्वाविप्रेभ्योवाविशुद्ध्यति अरण्येनिर्जलेजप्त्वाशुद्ध्येद्विवे
दसंहितां १०० सुरापस्याथवक्ष्यामिनिष्कृतिंश्रोतुमर्हति सुरापोनसुरांतप्तांपयोवाजलमेववा १
तप्तंगोमूत्रमाज्यंवामृतःपीत्वाविशुद्ध्यति जटीवाबालवासावाब्रह्महत्याव्रतंचरेत् २
पिबेन्मद्यंद्विजातिर्वाकदाचन पुनःसंस्कारकरणाच्छुध्येदाहपराशरः ३ सूर्यंकृत्वासुवर्णस्यशु
द्ध्येसर्वेद्विजातयः समभ्यंसुशलंराज्ञेख्यापयन्स्तेयकर्मतत् ४ आत्तिंचाभयतस्तीस्यांस्मायसंदं
डमेववा स्यादिंलकुंडंवापिहन्यादेकेनतंनृप ५ जीवन्नपिमवेच्छुद्धोमुक्तोवानेनपावन: न

श्वेतेनसंयुक्तोदिनिपाराशरोब्रवीत् ६ अथः स्त्रीप्रकृतिंकृत्वावन्हिवर्णांचतांधमेत् शुवंगना
गमीतस्यालोहमय्यांतुशाययेत् ७ वृषणौपुनरुत्कृत्यनेकृत्यांसुत्सृजेत्ततु समृतःशुद्धिमा
प्नोतिनान्यानस्यतुनिष्कृतिः ८ संवत्सरंचरेत्कृच्छ्रंप्राजापत्यमथापिवा चांद्रायणंचरेद्वापित्री
न्मासान्नियतेंद्रियः ९ व्रतेषुक्रियमाणेषुविपत्तिःस्यात्कथंचन समृतोपिभवेच्छुद्धइतिधर्म
विनिर्णयः १० अनिर्दिष्टस्यपापस्यतथोपपातकस्यच तच्छुध्यैपावनंकुर्याच्चांद्रव्रतसमाहितः
११ निष्प्रमाणंपयोन्यत्वापराकंवाचरेद्व्रतं अनिर्दिष्टस्यपापस्यशुद्धिरेषाप्रकीर्तिता १२ ब्राह्म
णः क्षत्रियंहत्वागवांदद्यात्सहस्रकं वृषभेणैकेनसंयुक्तंपापात्स्मात्प्रमुच्यते १३ वर्षाणित्रीणि
वापुष्येब्रह्मघ्नस्यव्रतंचरेत् चांद्रायणानिवात्रीणिकृच्छ्राणित्रीणिवाचरेत् १४ वैश्यंहत्वाद्विजा
श्चैतदाब्दंकृच्छ्रव्रतंचरेत् शतमेकंगवांदद्यात्चरेच्चांद्रायणंनव १५ कृच्छ्राणित्रीणिवाकुर्याच्च
नाद्दिदुगामशो यद्वसूरमदुष्टस्त्रीनातुवर्णाद्विजातयः १६ शूद्रहत्याव्रतंतेतुचरंतःशुद्धिमाप्नुयुः
शूद्रांचआनुलोम्येननिहत्याव्यभिचारिणीं मुनयःशुद्धिमिच्छंतिचंद्रव्रतेनकेचन १७ व्यभि
चारात्रतांहत्वापिताब्राह्मणादयः हंतिधेनुंवत्सभविकसाद्युविशुद्ध्येसाध्वीनांतुनरोह
त्वागवांनिरवाद्सहस्रकं शास्त्रीनांतुनरोहत्वानिरस्थीनांसहस्रकं चीर्णेनशुद्धिमाप्नोतियोषाह
त्याव्रतंचरेत् १९ अथगोघस्यवक्ष्यामिनिष्कृतिंश्रोतुमर्हथ यथायथाविपत्तिःस्याद्व्रतंतथोत
च्यते २० गोपातीपंचगव्याशीगोष्ठशायीनिगोनुगः मासमेकंव्रतंचित्वागोप्रदानेनशुद्ध्यति२१

तद्दोषात्तदा कृच्छ्रार्धमाचरेत् ३८ ग्रासंयोक्तुधार्तस्य तृषार्तस्य नवाजलं स्वीकृतस्य नचेद्यात्स
तस्माद्व्रतं चरेत् ३९ एकपादे तु लोमानि द्वाभ्यां श्मश्रुनिकृंतयेत् पादत्रये शिखावर्जं सशिखं तु नि
पातने ४० सशिखं वपनं कृत्वा त्रिसंध्यमवगाहनं गवां मध्ये वसेद्रात्रौ दिवा गाः समनुव्रजेत्
४१ तिष्ठंतीभिश्च तिष्ठेत व्रजंतीभिः सह व्रजेत् पिबंतीभिः पिबेत्तोयं शयंतीभिश्च संविशेत् ४२
शृंगकर्णादिसंयुक्तं चर्मोत्कृत्य तदा व्रतः विशोकस्तु चरेद्भिक्षां स्वकर्म ख्यापयन्व्रती ४३ गोघ्न
स्य देहि मे भिक्षामिति वाचमुदीरयेत् मासमेवं व्रती चीर्त्वा गोप्रदानाद्धि शुध्यति ४४ यान्त्रवद्धा चि
कित्सार्थं विशल्यकरणाय च औषधादिप्रदानाय विपत्तौ नास्ति पातकं ४५ विद्युत्पाताग्निदाघाभ्यां
कुड्यस्य पतनादिभिः गोभिर्विपत्तिमापन्नैस्तत्र दोषो न विद्यते ४६ पालस्य पश्यतोऽरण्ये गोस्तु व्या
घ्रादिभिर्हता अकुर्वतः प्रतीकारं कृच्छ्रार्धं तस्य पावनं ४७ एवं त्वन्येषु पालेषु तथान्यारण्यगा
मिषु पाले संयोपयत्स्वेवं हतात्तत्र न दोषभाक् ४८ गर्भिणीगर्भशल्यात्तु तद्गर्भस्तु विशल्यतः यत्न
तो गोर्विपद्येत तत्र दोषो न विद्यते ४९ गर्भस्य पातने पादो द्वौ पादौ गात्रसंभवे पादोनव्रतमाचरे
द्धत्वा गर्भमचेतनं ५० अंगप्रत्यंगसंभूते तद्गर्भे चेतनान्विते द्विगुणं गोव्रतं कुर्यादेषा गोघ्नस्य नि
ष्कृतिः ५१ वस्त्राद्युत्त्रासने गोश्च गलदामकदोषतः पादयोर्बंधनेच्चैव पादोनव्रतमाचरेत् ५२
घंटाभरणदोषेण गौश्चेद्बंधनमाप्नुयात् चरेदर्धव्रतं चैव भूषणार्थं कृतं यतः ५३ यः स्नाता पा
पसंभीतो विप्राराधनतत्परः तद्दत्तानि कृतिकुर्याद्दत्तेनाः शुभसंस्तुते ५४ अन्यत्प्राणिवधस्या

चौरव्याघ्रादिकेभ्यश्च सर्वप्राणैः समुद्धरेत् गर्तप्रतापपंकाच्च तथान्यत्रोपकारतः २२ भोजयेद्ब्रा
ह्मणान्सम्यक् तुष्यधूपादिपूर्वकान् दद्याद्गां वृषभं चैकं ततः शुध्येत्स किल्बिषात् २३ मुनयः केचिदि
च्छंति विचित्रासु विपत्तिषु यथासंभवतस्तासु निष्कृतिश्च पृथक्पृथक् २४ शस्त्रवस्त्राश्मभूमिसिंडय
ष्टिसुष्टिप्रघातनं योक्त्रणं तारणं रोधं बंधनं विद्युदग्नयः २५ गृहकुड्यप्रपातश्च वन्यव्याघ्रादिभक्ष
णं क्षुत्तृड्रोगाचिकित्सासु तथातिदोहवाहने २६ मृत्युस्थानानि चैतानि गवां भातिप्रधावनं प्राज्ञ
वीत्पृथगेतेषु प्रायश्चित्तं पराशरः २७ उपेक्षणे च पंकादौ तथोपविषभक्षणे वक्ष्यमाणक्रमेणेत
मा: २८ शस्त्रेण त्रीणि कृच्छ्राणि तदर्धं वा समाचरेत् अश्मना द्वे चरेत्कृच्छ्रे मृ
कं २९ यष्ट्या तु द्वे चरेत्कृच्छ्रे सार्धे तु सुष्ट्या तु तच्चरेत् योक्त्रणे पादमेकं तु तारणे पा
पादे द्वे कृच्छ्रमेकं तु बंधने कूपपाते चरेत्कृच्छ्रं अर्द्धं वाप्यां समाचरेत् ३१ गो
रे द्विजः क्षुत्तृड्रोगाचिकित्सासु कृतसुप्रेक्षणे चरेत् ३३ पतितां प
रः स्वस्य वान्यस्य वा सेव्यासार्धकृच्छ्रं चरेत्सुधीः ३२ एका चेद्बहुभि
तगोः पादं पादं चरेयुस्ते प्राह पाराशरो मुनिः ३४ सुबद्धायैव गुल्मागोप
क्षणं प्रोक्तं चरेयुस्ते व्रतं नराः ३५ यागार्ता दोविपद्येत द्वे डितासांप्रप
तत्कृतां व्रतमा प्रबद्धा रज्जुदोषेण गौर्विपद्येत यस्य सः प्रत
दक्षिणा

तथापरं भुक्त्वा विप्रस्तदन्नंस्याच्छुध्यश्चंद्रव्रतेनतु ७२ कामतस्तु द्विजःकुर्याद् कृच्छ्रीगम
नंयदि चंद्रव्रतद्वयंशुध्यैप्राहपाराशरोमुनिः ७३ दुग्धंसलवणंसक्तून्सदुग्धान्निशिसामि
षान् दंतछिन्नान्सकृद् तान्पृथक्पीतजलानपि ७४ योद्यादुच्छिष्टमाज्यंतुपीतशेषंजलंपि
बेत् एकैकशोविशुध्यर्थंविप्रश्चांद्रायणंचरेत् ७५ वासांसिधावतोयस्यपतंतिजलबिंदवः त
द्पुण्यंजलस्थानंरजकस्थशिलांतिकं ७६ तत्रपीत्वाजलंविप्रःश्रांतस्तृट्परिपीडितः तदेव
सोपिशुध्यर्थंकुर्याच्चांद्रायणव्रतं ७७ शैलूषींरजकींचैवनटींचवेणुवादिनीं गत्वाचांद्रायणं
कुर्यात्तथाचर्मोपजीविनीं ७८ गांनृपंचैववैश्यंचशूद्रंवाप्यनुलोमजं क्षत्रियादिस्त्रियंकृत्वा-
विप्रश्चांद्रायणंचरेत् ७९ ब्राह्मणान्नमदन्शूद्रः शूद्रान्नंब्राह्मणोप्यदन् द्वावप्येतावभोज्यान्नौ
चरेतांतौशशिव्रतं ८० विप्रेणामंत्रितोविप्रः शूद्राहूतश्चयोश्नुते आमंत्रपितृभोक्तारौशुध्ये-
तामैंदवेनतौ ८१ समानर्षिश्चयोगच्छेन्मातासहसगोत्रजां मातुलस्यसुतांचापिविप्रश्चांद्राय
णंचरेत् ८२ पीतशेषंजलंपीत्वाभुक्त्वोच्छिष्टमथाज्यकं अत्वामूत्रपुरीषंतुविप्रश्चांद्रायणंचरे
त् ८३ सूनाहस्तात्स्वगोमांसमत्वामद्यमकामतः पीत्वाचंद्रव्रतंकुर्यात्पावनंशुद्धिदंपरं ८४ सा
ग्निःसन्पंचयज्ञांन्सोनकुर्वीतद्विजाधमः परपाकरतोनित्यमात्मपाकविवर्जकः ८५ अदाता
चसदालुब्धःश्वपचःपरिकीर्तितः योद्विजोस्यान्नमश्नातिसकुर्यादैंदवव्रतं ८६ गणिकागण
योरन्नंयदन्नंबहुयाचकं सीमंतोन्नयनेभुक्त्वाद्विजश्चांद्रायणंचरेत् ८७ अजानन्यःसमश्नी

यान्युग्रजन्मनियोद्विजः सोभक्ष्यसमसम्भ्यानि द्विजश्चांद्रायणंचरेत् ॥८८ महापातकिनामन्नं
योयादज्ञानतोद्विजः अज्ञानात्तप्तकृच्छ्रंतुज्ञानाच्चांद्रायणंचरेत् ८९ प्रपातविषवन्ह्यंबुप्रव्र
ज्येहनवासिकान् च्युतोहतश्चहंनाचप्रत्यवासनिकाःस्मृताः ९० केचिदेनद्विशुध्यर्थंभिच्छंति
व्रतमेवदं दक्षिणांसदृशंगांचदद्युश्चद्विजभोजनं ९१ गृहद्वारेतिथौप्रासेतस्मादत्वासमश्नुते
अभोज्यमशनंतच्चभुक्त्वाचांद्रायणंचरेत् ९२ सव्यहस्तस्थितेदर्भेयोद्विजःसमुपस्पृशेत् अ
सृश्यानेनतुल्यंचपीत्वाचांद्रायणंचरेत् ९३ भुक्त्वाशय्यागतःपीत्वाविप्रश्चांद्रायणंचरेत् अभ
क्ष्येणसमंतद्वैप्रायश्चित्तंसमंभवेत् ९४ आसनारूढपादस्तुविप्रस्यार्धमधःकृतः धरासुरवेनयो
भुक्ते द्विजश्चांद्रायणाच्छुचिः ९५ उद्धृत्यवामहस्तेनकिंचित्पिबतियोद्विजः सुरापानेनतत्तुल्यं
पीत्वाचांद्रायणंचरेत् ९६ स्पृष्टेनयेनसस्नायाद्यदितन्दृ तमश्नुते चरेच्चांद्रायणंशुध्यैत्रीणिकृ
च्छ्राणिवाद्विजः ९७ चांद्रायणंनवश्याद्वेपराकोमासिकेमतः न्यूनाब्देपादकृच्छ्रंस्यादेकाहःपुन
राब्दिके ९८ स्नानमन्त्येषुकुर्वीतप्राणायामंजपंतथा यःस्वैरिणीनांचपुनर्भुवांचयःकामचार
द्विजयोषितांच क्रीतोधृतांपाकमनापदद्याद्विप्रःसचंद्रव्रतशुद्धिकृत्स्यात् ९९० वेश्मान्यज्ञात
चंडालोद्विजातेयदितिष्ठति व्रह्मकूर्चंचरेन्मासंत्रिस्नायीनियतेंद्रियः
न्यस्थाणिन्वासनानिच वह्निःकृत्वादहेद्द्रहंसंशुद्धोभोजयेद्विजान् गोविंशति
दद्याच्चदक्षिणां द्रुमंत्रनिकर्षंमुः कोपञ्चांद्रायणत्रयं अस्यपापस्यशुध्यर्थंचरेत्सांतपन

शूद्रिणींब्राह्मणोगत्वामासंमासार्धमेववा गोमूत्रयावकाहारोमासार्धेनविशुध्यति ३६ मृता-
ष्यस्वजनींगत्वाप्राजापत्यंसमाचरेत् वैश्यपत्नींसमोगत्वाचरन्सांतपनंशुचिः ३७ शूद्रींतुसृषि
योगत्वागोमूत्रयावकाशनः दशभिर्दिवसैःशुध्येद्वैश्योवाप्येवमेवहि ३८ उत्तमागमनेनार्थः
सर्वेतेस्युःकृताग्निना महापथंचसंप्राप्यास्वरयानेनयोषितः ३९ चंडालमेदभिन्नानामभिग
म्यसकृत्स्त्रियः शुध्येत्पयोव्रतंकुर्यान्मासार्धमघमर्षणं ४० पतितांचाद्विजाश्चस्त्रींप्राजापत्यं
चरेद्द्विजः तैलिकस्यस्त्रियंगत्वातथामद्यकृतःस्त्रियं ४१ अज्ञानाभिगतोस्त्रीणांपुंसांनुलोमज
स्यच इमांनिष्कृतिमिच्छंतिधृतयोनिंचकेचन ४२ पितृव्यभ्रातृजायांतुमातृष्वसारमेवच भ
गिनींचैवधात्रींचगत्वाकृच्छ्रंसमाचरेत् ४४ षण्मासान्केचिदिच्छंतिसंगास्यैताविशुद्धये कृ
च्छ्रंधर्मविदोविप्राःशुद्धितत्वार्थवेदिनः ४५ गुरुपत्नींद्विजोगत्वामातृष्वसृदुहितृषु क्षिपेच्छु-
ध्यर्थमात्मानंसुसमिद्धेग्नौहुताशने ४६ उपाध्यायनृपाचार्यशिष्ययोषिद्गमीनरः षण्मासकृच्छ्र
चरणाच्छुद्धिमाहपराशरः ४७ कृतचांडालसंस्पर्शःसकृन्मूत्रकरोद्विजः षड्रात्रोपोषणाच्छु
ध्येद्वत्वावांतेनवह्नुभिः ४८ ऊर्ध्वोच्छिष्टस्यसंशुद्धौकेचित्प्रजापतिव्रतं पराकंपंचगव्यंचकेचि
दाहुर्मनीषिणः ४९ उच्छिष्टोब्राह्मणःस्पृष्टःउच्छिष्टेनद्विजेनतु आचम्यैवतुशुध्येतांविष्णुना
मानुकीर्तनात् ५० क्षत्रियेणतुसंस्पृष्टोब्राह्मणोनक्तभोजनात् वैश्येनचैवसंस्पृष्टोनक्ताशीपं
चगव्यपा ५१ शूद्रेणैवतुसंस्पृष्टःएकरात्रोपवासकृत् उच्छिष्टैःपुनरेतैस्तुप्रोक्तोद्विगुणसहेति ५२

शल्यगनाद्वजंबूकेनवृकेणवा दिशंयामायतेसूर्यस्तांदिशंसाविलोकयेत् ६९ दिवसेपियथा-
शवोन्नताद्योगर्वोद्विजः विप्रंप्रदक्षिणीकृत्यघृतंप्राश्यविशुध्यति ७० चतुर्वर्णास्तुचिर्नारीकृता
भिगमनापिच प्रक्षाल्यनाभितोधस्तादाचांतस्तुशुचिर्नरः ७१ विप्रैर्मैथुनिनास्नानंकेचिद्राहि
पिरोविना नाभिंवार्ध्दशस्तद्विलिंगशौचंस्वजःशुचिः ७२ अभिगच्छन्सुतार्थंयद्दताहत्तोस्वि
यंद्विजः नकुर्यात्सचस्नानंनाभेरधस्तुशोधयेत् ७३ स्वंकारंतुगुरोःकृत्वाहुंकारंतुगरीयसः प्र
सार्थंतावनकान्स्यात्स्नात्वातुद्धोद्विजोत्तमः ७४ विवादेशास्त्रतोजित्वाजयोयस्यनजायते -
श्मशानंजायतेतस्यतमोभावेनदुष्कृतं ७५ ताडयित्वातृणेनापिस्कंधेनावध्यरज्जुना कलहा
दीर्णान्नाजंल्पतंयशाचविशुध्यति ७६ उद्गूर्णेतुचरेत्कृच्छ्रमतिकृच्छ्रंनिपातने कृच्छ्रातिकृच्छ्रो
गृह्यातेकृच्छ्रोभ्यंतरशोणिते ७७ प्रेतशूद्रान्नदग्ध्वान्चशुद्धिःस्नानाद्द्विजन्मनां उपवासेनचैके
नब्रह्मकूर्चंचगावनं ७८ प्रेतंमृतंचयःशूद्रंब्राह्मणोज्ञानदुर्बलः अनुगच्छेन्नीयमानंत्रिरात्र
मशौचभवेत् ७९ त्रिरात्रेतुततःपूर्णेनदींगत्वासमुद्रगां प्राणायामशतंकृत्वाघृतंप्राश्यविशुध्य
ति ८० अंगुल्यादंतकाष्ठंचप्रत्यक्षलवणंतथा मृत्तिकाभक्षणंचैवतुल्यंगोमांसभक्षणं ८१
कृत्वान्यनगतंतेपांहितंशुध्यर्थमात्मनः चरेच्छशिव्रतंविप्रइतिप्राहुर्मनीषिणः ८२ वदंति
कृच्छ्रः केचित्कृच्छ्रंसांतपनंतथा तदर्धंपादकृच्छ्रंवाप्राहुरन्येद्विजोत्तमाः ८३ अधोच्छिष्टो-
द्विजोज्ञानाद्यात्सधनाहिकिंचन शुक्लानाचम्यवाकुर्यान्चिण्मूत्रेकेहनिष्कृतिः ८४ नक्तोप

पवासावाधेतु अन्यत्रद्विगुणंचरेत् अष्टोत्तरशतंजप्त्वागायत्र्याः शुद्धिमर्हति ८५ अधोच्छि-
ष्टोद्विजः स्पृष्टः शुनावावृषलेनवा नक्तंदर्शनेश्नीयात्संचगव्यंपुरः सरं ८६ अधोच्छिष्टविप्रा
घाः श्वोच्छिष्टाः शूद्रसंस्पृशः उपवासेनशुध्येयुः पंचगव्यस्यपानतः ८७ श्वकाकीकाकसंस्पृष्टो
भुंजानोब्राह्मणोयदि तदन्नस्यपरित्यागात्स्नानंकृत्वाविशुध्यति ८८ विनायज्ञोपवीतेन भोजनं
कुरुतेयदि अथमूत्रपुरीषवारेनः सेचनमेववा ८९ त्रिरात्रोपोषितोविप्रः पादकृच्छ्रेतु भूमिपः
अहोरात्रोषितोवैश्यः शुद्धिरेषापुरातनी ९० विप्रस्यदक्षिणेकर्णेनित्यंवसतिपावकः अंगुष्ठेदा
पोपाणौतस्मात्तेनन्नसंस्पृशेत् ९१ प्रेक्षणंशशिनोर्कस्यब्रह्माविष्णवीशसंस्मृतिः गायत्र्याः शत
साहस्रंसर्वपापहरंस्मृतं ९२ गायत्र्यष्टसहस्रंतुब्रह्महत्याविशोधनं शूद्रवधेद्विजाध्यस्यगाय
त्रीत्रिसहस्रकं ९३ राज्ञः पंचसहस्रंतुस्याद्दिशश्चतदर्धकं योगेनगतशीलस्तुयदिवास्यात्स
दानरः ९४ ताबुभौसर्वदात्याज्यौनिश्चितंसर्वकर्मसु माक्षिकासंततिद्वाराविप्रुषोब्रह्मविंद
वः ९५
आत्मरूक्षस्तथैवच आत्मनः शुचयः सर्वेपरेषामशुचीनितु ९६
: स्नात्वास्नात्वास्पृशेदेनंततः शुध्येत्स आतुरः ९७
पलायनेतथारण्येस्पर्शदोषोनविद्यते ९८ आद्यसंगीसमो
: तत्संगीतृतीयमार्गीतु रीयस्तुनदोषभाक् ९९ आद्यस्यदूर्संवेत्स्नानं
द्वितीयस्यापितत्स्मृतं शिरः प्रोक्षणमन्येषामन्यत्राचमनंविदुः

दंतधावनकृन्नरः दिवाकीर्तिसमस्तावधावद्धेत्तुंनपश्यति १ पद्मास्यलोहफलकाधूत्तमभा
डस्थलेपास्वयमेवशौचं पुंसांनिशास्वध्वनिनिःस्वानांस्त्रीणांचसुद्धिर्विहितासदापि २ स्ने
हस्पृष्टेनयेनस्यात्काष्ठाद्यैर्यदितत्स्पृशेत् नावारोहणवत्स्पर्शेतत्रोपस्पर्शनाच्छुचिः ३ म्लेच्छ
शूद्रासनास्पर्शेक्षेत्रेवायदिवास्थले उपस्पृशेच्छिरःप्रोक्षंसंशुद्धोजायतेद्विजः ४ वस्त्रसंस्पर्श
नेतस्यसचैलोभोवगाहनं अंगस्पर्शनवत्तद्धिवदंतिद्विजसत्तमाः ५ चंडालोदकसंस्पृष्टः
शुद्धःस्नानेनजायते तथातद्भांडसंस्पर्शेस्नानमाहुर्मनीषिणः ६ उदक्यास्पर्शनेस्नानमस्पृके
नागतोपिवा तत्स्पृष्टेपिभवेत्स्नानंतुल्याःसर्वारजस्वलाः ७ संस्पर्शेभेदभिन्नानांतथैवब्र
ह्मघातिनां पतितानांचसंसर्गेस्नानमेवंविधीयते ८ रजस्वलादिसंस्पर्शेउपस्पर्शनमुच्यते उ
दक्यायास्तृतीयेन्हिकेचिदाचमनंविदुः ९ प्रथमेहनिचांडालीद्वितीयेब्रह्मघातिनि तृतीयेर
जकीप्रोक्ताचतुर्थेस्नानतःशुचिः १० पुरुहूतःपुरादैत्यंत्रिशीर्षंकृजयानयत् तद्वधब्रह्महत्या
याःस्त्रीणांसंप्रददौफलं ११ आसांतस्मभृतिस्त्रीणामस्पृश्यत्वंसमाभवेत् अंशोदनत्रयेप्येत
च्छुक्रगुर्वादिकल्पिते १२ शवरास्तुपुलिंदाश्चकेचदाश्वनटास्तथा एतान्रजकसंतुल्यान्केचि
दाहुर्मनीषिणः १३ रजक्याद्यभिगम्यत्वेवैश्यागोमूत्रयावके पिबंतिषड्गुणाहोभिःकृच्छ्रं
द्विगुणंभवेत् १४ ब्रह्मक्षत्रियविट्जाताःशूद्रास्तेनुक्रमेणतु क्रमातिक्रमतस्त्वान्येम्लेच्छास्य
वर्णसंभवः १५ भोज्याशनास्तुसच्छूद्राअभोज्यान्नाःपरेस्मृताः आमाशनानिभोज्यानिस्पृ

तस्मुच्छिष्टमुच्यते १६ दासनापितगोपालकुलमित्रार्धसीरिणः भोज्यान्नानापितश्चैव यश्चात्मा
नंनिवेदयेत् १७ पर्युषितंचिरस्थंच भोज्यंस्नेहसमन्वितं यवगोधूमावस्नेहो ततोगोरसविक्र-
याः १८ आपद्गतोद्विजोश्नीयाद्गृह्णीयाद्यायतस्ततः नसलिप्येतपापेनपद्मपत्रमिवांभसा १९ अ
पितंशूद्रगेहेन्नंकंडुपक्वंचयद्भवेत् नीत्वानद्यादिकेतद्वैभोक्तव्यंभुंजन्नदोषभाक् २० गायत्र्योंका
रभूताभिः केचिदाद्भिरपोक्षणं मन्यंतेविष्णुमंत्रेणकलिधर्मसमाश्रिताः २१ आसंमांसघृतंक्षौ
द्रस्नेहाश्चफलसंभवाः म्लेच्छभांडस्थितादुष्यानिष्क्रांताश्शुचयः स्मृताः २२ आभीरभांडसंर
निपयोदधिघृतानिच तावच्छुद्धंहितद्भांडंयावत्तन्नत्रतिष्ठति २३ पूतानिसर्वपण्यानिकारुह-
स्तस्थितानिच अदत्तानिचभक्ष्याणियत्नतस्तुद्विजातिभिः २४ सर्वस्योपस्करेश्शुत्काशस्यारक्तां
[illegible]निच पुष्पाणिचैवशुध्यंतिप्रोक्षितानिनसंशयः २५ अलेपंमृन्मयंभांडं भांडसंचयएवच
द्विवशुध्यंतिसलेपंवह्निचूलनात् २६ कांस्यंचभस्मनाशुध्येन्मद्यमांसविवर्जितं सुरा
पिंडशुध्यतेतापलेपनैः २७ आलिसमद्यपूर्वाद्यैस्ताम्रमम्लेनशुध्यति रजसास्त्री
घम्रवेगसंयुताः २८ अवेगमपियद्वारिसारिद्वारिद्दध्वयः सकृदस्पृश्यसंस्पृ
दुष्यतिचसद्बुदः २९ सत्येनपूयतेवाणीधर्मःसत्येनवर्धते तस्मात्सत्यंहिवक्तव्यंमात्मशु
द्धोन्नमः ३० रथ्याकर्दमतोयानिनावापथतृणानिच मारुतार्केणशुध्यंतिनिशिचं
मारुतैः ३१ यथासंभव[illegible]

गानंकृत्वादिनैःसांतपनंद्विजेः १३ समाहेनतुकृच्छ्रोयंमुनिभिःपरिकीर्तितः एतत्तुत्रिगुणंतस्मः
गरुसांतपनंस्मृतं १४ प्राजापत्यंतुकृच्छ्रस्यपराकस्त्रिगुणोमहान् एकभक्तंचनक्तंचअयाचि
तगुणोपणं १५ पादकृच्छ्रोयमुद्दिष्टस्त्रिभिःप्राजापतिव्रतं अयमेवातिकृच्छ्रःस्यात्पाणिपूरान्न
भोजनं १६ कृच्छ्रातिकृच्छ्रंपयसादिवसानेकविंशति दिनैर्द्वादशभिःप्रोक्तःपराकःसमुपोषितेः
१८ एकत्र्यहंस्त्र्यहंदांतिनक्तंचैवतथास्मृतं संप्राश्यतिलपिण्याकंनक्तंतोयंकुशोदकं पंचमे
त्र्यहेपराःस्यात्सौम्यकृच्छ्रोयमुच्यते २० चांद्रायणेचकृच्छ्रेचत्रिकालस्नानमाचरेत् स्नानद्व
यंप्रकर्तव्यंव्रतेसुचापरेष्वपि २१ शक्तिंज्ञात्वाशरीरस्यस्नानंकार्यंतथाव्रतं असामर्थ्येनकाय
स्यचान्यायदनुग्रहं २२ ब्रह्मकूर्चंप्रवक्ष्यामिव्रतानामुत्तमंव्रतं कृतेनयेनमुच्यन्तेमनुष्याःस
र्वकिल्बिषैः २३ नीलवर्णायास्तुगोमूत्रंकृष्णायाःशकृदुद्धरेत् अत्रावसर्ववर्णायाःकपिलायाः
गमुद्धरेत् २४ पलानिपंचमूत्रस्यअंगुष्ठार्धंतुगोमयं क्षीरंसप्तपलंग्राह्यंतथादध्नःपलत्रयं २५
घृतंचाप्येकंग्राह्यंपलंकुशोदकस्यः मंत्रैःसर्वाणिचैतानिअभिमन्त्र्याथमिश्रयेत् २६ गा
यत्र्यान्वयगोमूत्रंगंधद्वारेतिगोमयं आप्यायस्वेतिचक्षीरंदधिक्राव्णोदधिस्मृतं २७ तेजोसिशु
क्रमित्याज्यंदेवस्यत्वाकुशोदकं निष्पन्नंपंचगव्यंचपात्रेणक्रमतःपिबेत् २८ मध्यमेनपलाश
स्यतत्समर्णपर्णेद्विजाः द्वितीयंपद्मपत्रेणब्रह्मपत्रेणचापरं २९ चतुर्थंताम्रपात्रेणतस्मिंश्चैव
तदनंतरः ओंकारप्रणवेनैवनिर्मथ्यप्रणवेनतु ३१ उद्धृत्यप्रणवेनैवप्राशयेत्प्रणवेनतु वि

मात्रोपजीविनः तोयमन्नंच वांछंति किंपुनः सालुराशिणः ४ सर्वोपस्करसंयुक्तं गृहंच गृहमातृकं
वृषद्विसुक्तंसीरंच वृषमेकं तथैवच ५ गृहस्यग्रायाः प्रदानंच धेनुदानमथापरं द्विमुखींसोरभे
यींच तिलधेनुमतः परं ६ घृतधेनुंपयोधेनुंहेमधेनुंसुविस्तरं कृष्णाजिनप्रदानंच वाजिस्यंद
नमाहसः ७ एकवाजिप्रदानंच तथातस्यपरिग्रहः सुवासनादियानानिहस्तिरथं तथागजं ८
गजदानंचवक्ष्यामि कन्यादानफलंयथा भूमिदानफलंवक्ष्ये तुलापुरुषमेवच ९ हेमरूप्यप्रदा
नंचनाणकादिसमन्वितं त्रपुसीसकताम्रादिसर्वधातुप्रदानवत् १० नक्षत्रतिथियोगेषुयद्य
द्दानस्ययत्फलं विद्यादानफलंतस्यप्राणदानस्ययत्फलं ११ अभयादिकदानानि प्रतिग्रहेयथावि
धिं इष्टापूर्तफलोपेतां सर्वं विस्तरतोमया १२ शक्तिसूनोः श्रुतं पूर्वं कथयामि कमाच्छृणु गोभू
हेमादिदानानां सर्वेषामप्यनुत्तमं अन्नदानमपेक्षंते सर्वे आपादिवौकसः १३ अन्नार्थं मातरिश्वा
यमन्नार्थंच तथानलः अन्नार्थं सविता देवो वाति ज्वलति भासते १४ अन्नकामः ससर्जेदं विधि
र्ग्याखिलंजगत् अन्नात्परतरं तत्वं न भूतं न भविष्यति १५ दद्याद्योहरहस्तस्मादन्नं विप्राय सानुगः
भूतं वा यदि वाचामं सस्वर्गे सुखमेधते १६ शोभनान्नभृतान् कुंभान्पक्वान्नोपरिपूरितान् अपूपं
मोदकाद्यैर्नादत्वादिविसुखवसेत् १७ मणिकं कलशान्वापियो भावचाति शक्तितः सुसुभाद्रि
द्विजोकस्तुसमपाशादिवंव्रजेत् १८ यो द्विजान्पाययेत्तोयमन्यान्पिपिपासुकान् प्रपाश्च सावंय
दीर्घंदेवलोकमवाप्नुयात् १९ पट्टधा[illegible]
यंचेधा

सीतेचावरणानिच २० उपानत्पादुकेचैवददत्वामानवप्रुयान् समधान्यसमायुक्तंसर्वंस्नेहसम
न्वितं २१ सर्वोपस्करसंयुक्तंसर्वालंकारभूषितं हिरण्यगोवृषाश्चैवतूलशय्योपधानकैः २२ वस्त्र
स्त्रीभूषणैर्युक्तंसकांस्यंताम्रभाजनं पट्टधान्यादिसमायुक्तंददस्नात्वाथमानवः २३ पक्वेष्टिकाचि
तंकृत्वासर्वलक्षणसंयुतं मृन्मयंवातथावेश्मकृत्वावाप्यमयंतथा २४ दत्वास्थानमवाप्नोतिप्राजाप
त्यमसंशयं २४ प्राकारायत्रसौवर्णागृहाण्युप्तेस्तराणिच माणिक्यगारुडवज्रमौक्तिकैर्भूषितानि
च २५ देवकन्यासहस्रेणसंवृतोगीतनृत्यकैः सेव्यमानोमरुत्संघैर्वैधसासहसंवसेत् २६ अनड्वाहौ
चधूर्वाहौवलवन्तौसुलक्षणौ तरुणौसुविषाणौचघंटाभरणभूषितौ २७ अदुष्टौचैकवर्णौचसाशि
रौदक्षिणान्वितौ आहूयचद्विजाग्र्यायभक्त्यादद्यात्तुमानवः २८ सोनड्वारोमतुल्यानिस्वर्गेप
र्याप्तितिष्ठति अप्सरोभिर्वृतोनित्यंसेव्यमानःसुरासुरैः २९ एकोपिहिवृषोदेयःधूर्वहःसुलक्ष
णः अरोगस्त्वपरिक्लिष्टोयस्मात्सदशगोसमः ३० एकनदत्तेनवृषेणयस्माद्भवंतिदत्तादशसौरभे
यः माहेयिचोयंधरणीसमानस्तस्माद्वृषात्पूज्यतमोस्तिकोन्यः ३१ गृष्टिदानंप्रवक्ष्यामियथादेयंद्वि
जोत्तमे योविधिर्दक्षिणायाश्चतथासर्वंनिवोधत ३२ एकरात्रोषितःस्नातोगोदातापंचगव्यपः पं
चामृतेनसंस्नाप्यसंपूज्यगरुडध्वजं ३३ सवत्सांवत्ससंयुक्तांसितयज्ञोपवीतिनीं सुविषाणांसु
रूपांचशुभलक्षणसंयुतां ३४ हेमकल्पितशृंगांचसुरूप्यचरणाग्रकां पयस्विनींसुशीलांचहिर
ण्योपरिसंस्थितां ३५ हिरण्यंवाचयित्वाग्रेसद्विजायोपपादयेत् प्रत्यक्षुरवायविप्रायगृष्टिंचता

ुरवेरिताः नस्फुरंतीहतन्मंत्राजपहोमादिकेषुच ७० नदानंदीयतेनस्मैनतंकर्मणियो-
जयंत निष्फलंतत्कृतंकर्मसूतस्यौषधदानवत् ७१ अथातःसंप्रवक्ष्यामिघृतधेनुंसमापिद्विजाः यं
नसाविधिनादेयातंप्रवक्ष्याम्यशेषतः ७१ वदामिधेनुंघृतपूरकल्पांविधिंचवस्त्राणिचयैःप्रकल्प्य
तस्याःप्रदानेनफलंचयत्स्यात्क्रियांचपात्रंतुपर्वयच्च ७२ गोक्षीरसर्पिर्मधुखंडदध्नासंस्नाप्यवि
ष्युंगुभवारिणाच संपूज्यपुष्पैश्चविलिप्यगंधैर्दद्यान्निवेद्यंचसधूपदीपं ७३ घृतंचवह्निंघृतमे
वसोमोघृतंचसूर्योघृतमेववारि प्रदेहितस्माहुतमेवविद्वान्घृतंप्रदत्तेसफलंप्रदत्तं ७४ घृतेनगा
त्वेनतुपूर्णकुंभः प्रकल्प्यनेगोः करकश्चवत्सः हिरण्यचगाभांमणिरत्नशोभां कुरुष्वकर्पूरसुचारु
नासां ७५ शृंगेचकुर्यादगुरुदारवेचसौवर्णनेत्रेपटसूत्रसास्ना लोमेचपुच्छंगुडदुग्धवक्त्रंजि
ह्वाचतस्यावरशर्करायाः ७६ द्राक्षान्तीसरवर्जूरैरन्यैःस्वादुफलैश्चपि उरस्थानचकर्तव्यान
त्रंपृष्ठंचधीमता ७७ इक्षुयष्टिमयाःपादाःशफारौप्यमयास्तथा धान्यैश्चसप्तभिःपार्श्वैर्लोमा
निसितसर्षपैः ७८ कांस्यदोहाप्रकर्तव्यासितवस्त्रावृतातथा सितछत्रसमायुक्तासितचाम
रभूषिता ७९ वत्सस्यकुर्यादितिभूषणानिप्रोक्तानिसर्वाण्यपियानिधेनो अंगानिसर्वाणिच
तद्वदस्य छत्रंचवस्त्राणिनथैवविप्रः ८० गृहाणचैनांसमपापहत्यैदुस्तारसंसारपयोधिपोतः
संसारतारोभवभूमिदेवस्वर्गप्रदानक्षमविप्रराज ८१ विष्णुःसुरेशोघृतरश्मिरस्यादानेनतु
धास्तुवरंकिंतु व्याहृत्यचैनांद्विजहस्ततोयंदत्वासमस्तानिचवारिणै
८२ दत्तो

द्रायनाच विलाप्रतिग्रहं पश्चात्कूस्तोदकंदद्यादेषप्रतिग्रहस्थितिः [illegible] यमर्गानामथ्योगाथामुद्रा
हरंतितान्हिदः दातृणांसन्तमानांच विशेषप्रतिपत्तये ४८ गोभूहिरण्यसंयुक्तंभागमेकंददाति
यः ससर्वपापकर्मापि मायुज्यंब्रह्मणोव्रजेत् ४९ प्रोक्तेनचानेनमुनीशमार्गद्यान्द्विजेंद्रागविधि
नाप्रयुक्तं पापानिहत्वासपुरातनानि प्रयातिवेधानप्रुषीनयोगी ५० सुखासनंचयोदद्याद्द्विजा
नाख्यमनुत्तमं दिव्ययानेदिवंयातिस्तूयमानःसुरासुरैः ५१ यारथेंदवसंयुक्तंहेमप्रुष्परत्नकृतं
कृतरज्जुंचपत्राद्यैनेत्रपट्टैः कृतैरपि प्रतत्तावस्थगितंवस्त्रैः पट्टैः पट्टोलिकैःसुभैः मुक्ताफलै
स्तथानेकमणिभिश्चोपशोभितं ५३ हयोचरुचिरैवस्त्रैर्भूषितावत्सलंकृतैः तौभूषणैरलंकृत
सुखयंत्राभिशोभितौ ५४ सपर्याणौकशायुक्तौग्रीवाभरणभूषितौ सुभलक्षणसंयुक्तौतरु
णौतत्रयोजयेत् ५५ रविसोमग्रहदद्यात्सुभवान्यत्रपर्वणि प्रदद्याद्योद्विजाग्र्यायसप्राप्नोत्यक
लोकतां ५६ वसेद्वर्षसमंतत्रसेव्यमानःसदैवतैः एकंवापिदृढंदलाश्वोलंकारभूषितं सुल
क्षणंयुवानंचसोश्वलोकमवाप्नुयात् ५७ प्रदद्याद्योरथंरम्यंहेमरत्नविभूषितं दिव्यवस्त्रप
रिच्छन्नंनेत्रपट्टादिभिःशुभैः ५८ सौवर्णैरर्धचंद्रैश्चराजतैर्वापिभूषितं शुभैर्मुक्ताफलैरन्यै
र्नीलवज्रादिभिस्तथा ५९ गजौसुलक्षणोपेतौसुशीलौनिरुजावपि सुभदंतौसुरूपौचहेमा
लंकारधारिणौ ६० दिव्यवस्त्रैःपरिच्छन्नौकर्णशंखावलंबितौ पट्टनेत्रादिकक्षौनौविशिष्टस
पिमंडितौ ६१ ईदृक्रथंचसंयुज्यपताकादिविभूषितं शोभितंपुष्पमालाभिःशंखदुंदुभिनिः

